॥ श्रीः ॥

# जयपुरविलास-

## मुक्तकमुक्ताल्यौ

सारशत-

मितित्रितयम् ।

श्रीकृष्णरामकविकृत-

मेतदमूल्यं विजानीयात् ॥

॥ शम् ॥

॥ श्रीः ॥

# ॥ विज्ञप्तिपद्यम् ॥

प्राज्ञाः पुस्तकमर्पयामि

किमिदं

काव्य

प्रणेताऽस्य क

## श्रीकृष्णोऽस्मि

तदेतदाकुलतया दोषैर्न रोचिष्यते ।

एवं चेत्क्रियतां विशुद्धि-

रथवा प्रौढेऽपि काव्ये पुनर्दोषाः कुत्र न सन्ति

सन्ति

यदि तत्रहीन सर्वोपन ॥ १ ॥

शुभम् ।

॥ श्रीः ॥

# भूमिका.

अस्तीह भरतवर्षे पुष्करमथुरास्यतीर्थयोर्मध्ये ।
निजरुचिजितनिखिलपुरं विभवभरं जयपुरं नगरम् ॥
शिवपुरमिव सकुमारं वैद्यस्थानमिव यच्च रससारम् ।
स्वरिव वसुचमत्कारं पातालमिव कविसत्कारम् ॥
अनेकविधवाणिज्यसमुत्सुकवणिक्वरम् ।
नालीनिर्गतपानीयधारासंसिक्तचत्वरम् ॥

किं बहुना ।

विद्यते बहुधा यस्मिन्नुद्यानेषु वियोगिता ।
खड्गेषु कोशनिष्ठत्वं हरिणेषु कुरङ्गता ॥
किं च यत्र वरीवर्ति कदर्पे दर्पकश्रुतिः ।
नीरधौ निम्नगासङ्गो व्रते मण्डपसत्क्रिया ॥
तत्रासीद्भट्टमेवाडो गुर्जरो भूमिनिर्जरः ।
चन्द्रोज्ज्वलयशाः श्रीमाञ्छङ्कराभिधो भिषक् ॥
रोगनिग्रहनिश्चिन्तजनगीतमहामहाः ।
ततः श्रीकुन्दनः कुन्दकीर्तिः सूनुरजायत ॥
यस्मै श्रीरामसिंहाख्यो राजा कूर्मकुलेश्वरः ।
दत्तवान्पाठशालायामुच्चकैर्वैद्यकासनम् ॥
वैद्यवाचस्पतेस्तस्य त्रिवारोढत्रियोषितः ।
प्राप्तलक्ष्मीविलासस्य द्वावभूतां सुतौ कवी ॥
तत्र श्रीकृष्णरामोऽहं ज्येष्ठः श्रेष्ठयशोरुचिः ।
अलंकारि चमत्कारि काव्ययुग्ममकल्पयम् ॥
तदिदं विदुषां प्रीत्यै प्रकटीकर्तुमुत्सुकः ।
श्रीनारायणभट्टेभ्यो नमस्कृत्य न्यवेदयम् ॥
मुद्रापणविशोधाभ्यां टिप्पणीकरणेन च ।
तैरस्म्युपकृतस्तेभ्यः किं ददामि नमोऽन्तरा ॥

अथवा गुणगुम्फश्रीस्तेषां सालंकृतिः कृतिः ।
मत्कृतेरुपरिन्यस्ता श्रयतां शेखरश्रियम् ॥

इदं पुनरन्यदाशास्यते ।

काव्यमालाविलासिन्यां प्रनृत्तायां चिरं बहु ।
चेटीव मत्कृतिरियं तत्पुरः परिनृत्यतु ।
विगुणापि मदुक्तिर्वो हर्षायैव भविष्यति ।
केषां न प्रीतिमाधत्ते गद्गदं बालजल्पितम् ॥
यदत्र मर्त्यसुलभं दृश्येत स्खलितं क्वचित् ।
संशोधयन्तु तत्सन्तः करुणावरुणालयाः ॥



अतदर्होऽपि विद्वद्भिर्यैः श्लोकैरस्मि वर्णितः ।
लिखामि कवितारङ्गी प्रसङ्गादिह तानपि ॥

तत्र तावद्भट्टश्रीनारायणचरणानाम्—

'साहित्यामृतसागरप्रमथने निर्व्याजमन्थाचलः
स्फारस्फूर्जितगद्यपद्यकविताकान्तारकण्ठीरवः ।
रोग्यारोग्यविधिप्रबुद्धधिषणो लक्ष्मीविलासास्पदं
श्रीमत्कुन्दननन्दनो विजयते श्रीकृष्णरामः कविः ॥'

अथ मित्रवरपण्डितशिवदत्तस्य—

'काव्यं यदीयं गृहमम्बरं वा सुवर्णचित्रोज्ज्वलमाविभाति ।
स नन्दनो नन्दतु कुन्दनस्य श्रीकृष्णरामः कविराप्तकामः ॥'

अथायोध्यकगोलवादिद्विवेदकविदुर्गाप्रसादस्य—

'उद्यल्लावण्यलक्ष्मीवलयितवपुषां स्वर्गवाराङ्गनाना-
माश्लेषे यः प्रमोदः स्फुरति च गरिमा योऽमृते माधुरीणाम् ।
सौरभ्यं कुङ्कुमे यत्पयसि विमलता याप्यहो तत्समस्तं
मित्रैकत्रेक्षितुं चेदभिलषसि तदा पश्य कृष्णस्य काव्यम् ॥'

इति शिवम् ।

॥ श्री ॥

# ॥ प्रशंसापत्रम् ॥

---

॥ श्रीगणेशाय नमः ॥[1]

गोपीलोचनयुग्मगोलवसतिर्गोपालगोष्ठीरति-
गोर्[2]रक्षाधृतगोपवेषरुचिरो गोवर्द्धना[3]गोद्धरः ।
गोलोकाधिपतिः खगोत्तमरथो गोत्रा[4]पतिं गोपति-
र्गोविन्दो[5]ऽवतु गोकुलादृतरसो गोपालगोत्रोद्भवः ॥ १ ॥
श्रीगोवर्द्धनधारणादृतमना नित्यं भुजङ्ग[6] द्विप-
न्धर्मा[7]लम्बनकारणं कुवलयापीडा[8]पहन्ता किल ।
अक्रूर[9]प्रियकृत्सदोद्धव[10]सखो दत्तोग्रसेना[11]दरः
श्रीमन्माधवसिंहभूपतिरसौ श्रीकृष्णवद्राजते ॥ २ ॥
भाद्रे[12] मास्यसिते दले शिवतिथौ यस्यार्द्धरात्रे जनि-
र्येन क्रीडनकैरनायि बहुभिर्वृन्दावने शैशवम् ।
तारुण्ये हतकण्टकं नृपपदं भार्याश्च यो लब्धवाँ-
स्तं श्रीमाधवसिंहभूपतिममुं कृष्णं न मन्येत कः ॥ ३ ॥
शृङ्गारो[13] महिलाजनेष्वधिसभं हास्यो विपद्दर्शने
प्रत्यक्षः करुणो विपक्षदलने रौद्रोऽथ वीरो युधि ।
पापौघे च भयानकोऽनयकृतौ बीभत्सकः सद्गुणै-
राश्चर्यो रसमूर्तिरेष जयति श्रीमाधवेशः प्रभुः ॥ ४ ॥
दुष्टग्राहनिपीडितं च दयया मातङ्ग[14]मप्यात्मनो
नामग्राहिणमुज्झितान्यकरणो यो मोचयत्यञ्जसा ।
तस्मिन्माधवसिंहवीरनृपतौ सद्धर्मरक्षाकरे
नाविष्णुः पृथिवीपतिः श्रुतिरियं प्रत्यक्षमालक्ष्यते ॥ ५ ॥
अष्टाभिः[15] किल दण्डनीतिनिपुणैः सत्प्राड्विवाकैः[16] समं
मध्येसौधं[17]मनुत्तमासनगतः कार्याणि[18] कुर्वन्नृणाम् ।

---

१ आशीर्वादपद्यमिदम् अत्रानुप्रास एवालंकारः २ गौः पृथ्वी ३ गोवर्द्धनस्याग-स्योद्धरो धर्ता ४ राजानम् ५ श्रीलक्ष्मी ,गीर्वाणी तयोर्वर्द्धनधारणयोरादृतं मनो यस्य, पक्षे स्पष्टोऽर्थः ६ विटम् पक्षे कालियम् ७ धर्मो युधिष्ठिरश्च ८ मूवलयस्यापीडा-या कुवलयापीडस्य च ९ सांम्यस्य क्षत्रियविशेषस्य च १० उद्धवः उत्सवः क्षत्रिय-विशेषश्च. ११ दत्तः शूरसेनाय तन्नामकग्रामतामहायचादरो येन १२ पूर्णिमान्तमानेने-दम् १३ अत्र रूपकमुल्लेखालंकारौ १४ गजम् पक्षे चाण्डालमपि १५ 'आन्वी क्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती' इत्युक्तायाम् १६ 'इहरि व्यवहाराणां प्रा-ड्विवाकाक्षदर्शकौ' इत्यमरः १७ 'कुर्सी' इति प्र १८ व्यवहारान् 'मुकद्दमे' इति ग्रामद्वारा अत्र भ्रान्तिमानलंकारः

विष्णुर्भूपवपुर्विधाय किमसौ दिक्पालयुक्पालय-
त्येवं भ्रान्तिमतो मनाङ्क कुरुते कॉस्कानयं भूमिपः ॥ ६ ॥
दिक्पाला इव दिग्गजा इव तथा वस्वाख्यदेवा इव
शृङ्गारादिरसा इव प्रविलसद्योग[1]प्रतीका इव ।
राजन्ते रमणीयविष्टर[2]गताः श्रीकान्ति[3]चन्द्रादयः
श्रीमन्माधवसिंहवीरनृपतेरष्टौ महामन्त्रिणः ॥ ७ ॥
रक्तः[4] सर्वजनेषु शत्रुनिकरे कालो[5] यशोमण्डले
शुक्लः[6] कान्तहरित्[7]प्रतापविभवैर्गौरैः[8] शरीरेण च ।
विद्वन्मण्डलमण्डने च कपिशै[9]श्चित्रै[10]श्चरित्रव्रजैः
श्रीमन्माधवसिंहवीरनृपते त्वं सर्ववर्णा[11]श्रयः ॥ ८ ॥
प्रक्षिप्तैरितरेतरेण बहुभिः पैष्टातकै[12] रेणुभि-
र्मध्येवीथि रजस्वलामिव महीं कुर्वन्करीन्द्रे स्थितः ।
क्रीडत्येष पुरोगतैश्च गुरुभिः पार्श्वद्वये बान्धवैः
श्रीमन्माधवसिंहभूपतिलको वासन्तिके वासरे[13] ॥ ९ ॥
यज्ञै[14]र्देवगणान्धनैर्द्विजगणान्मानैस्तथा बान्धवा-
न्न्यायैः पौरगणान्वधूगणमथ स्नेहेन संमानयन् ।
पुत्रैः पौत्रगणैः सुखान्यनुभवञ्शृण्वन्कृतीर्मादृशां
श्रीमन्माधवसिंहवर्मनृपते जीयाः समानां शतम् ॥ १० ॥

॥ अथ प्रार्थना ॥

अस्मत्पितामह[15]सहोदरनिर्मितानि काव्यानि सन्ति जयवंश[16]मुखानि पञ्च।
तानि स्वपूर्वजचरित्रयशःप्रसिद्ध्यै राजन्प्रसिद्धिमुपपादय मुद्रणेन ॥११॥
श्रीपर्वणीकरोपाख्यनारायणसुधीकृतम्।प्रशंसापद्यदशकं भवताद्भूपतेर्मुदे

॥ शुभम् ॥

---

१. ‘अङ्गं प्रतीकोऽवयवः’ इत्यमरः. अष्टौ योगाङ्गानि प्रसिद्धानि. २. ‘कुर्शी’ इति प्र. ३. कान्तिचन्द्रगोविन्दसिंहप्रतापसिंहसावन्तसिंहमोतीलालमीरकुर्बानलीमहाराजकृष्णशंभुसिंहाख्याः. ४. अनुरक्तः शोणवर्णश्च. ५. यमरूपः श्यामवर्णश्च. ६. उभयत्रैक एवार्थः. ७. दिशाः, हरिद्वर्णश्च. ८. पीतवर्णः. ९. सिह्लकाख्यसुगन्धिद्रव्यविशेषः. रूपकम्. श्याववर्णश्च. १०. आश्चर्यकारी चित्रवर्णश्च. ११. सर्ववर्णानां सप्तविधरूपाणां ब्राह्मणादीनां च. १२. ‘गुलाल’ इति प्रसिद्धसवन्धिभिः. १३. वसन्तपञ्चम्याम्. १४. आशीर्वादपद्यमिदम्. १५. सखारामभट्टानुजसीतारामनिर्मितानि. १६. जयवंशलघुरघुवंशराघवचरित्रनृपविलासनलविलासनामकानि.

॥ श्रीः ॥

# ॥ जयपुरविलासकाव्यं ॥

वैद्यश्रीकृष्णरामकविविरचितम् ।

पर्वणिकरोपनामकनारायणभट्टकृतशोधम् ।

तेन कविनैव कीर्त्य

श्रुतियुगनन्देन्दुशरदि

१९४४

मुम्बय्याम् ।

"निर्णयसागर" यन्त्रे मुद्रापितमात्मवित्तेन ।

सन् १८८७ इसवी

॥ श्रीः ॥

अथ

# जयपुरविलासः

प्रारभ्यते ॥

## प्रथम उल्लासः

॥ श्रीगणेशाय नम ॥

सिन्दूरशोणशुण्ड प्रत्यूहव्यूहभङ्गविधिचण्डम् ।
रिपुनाशकालदण्ड प्रणमामि पुराणवेतण्डम् ॥ १ ॥

ऐकलिङ्गमिह ये कलयन्ति के कलि कथय ते प्रथयन्ति ।
देहली त्यजति जातु न तेषा स्नेहलिङ्गमधिक दधती श्री ॥ २ ॥

गङ्गा तुङ्गतरङ्गाऽनङ्गारिशिर समुल्लसत्सङ्गा ।
कूलविलोलविहङ्गा निर्मलरङ्गाऽस्तु विघ्नभङ्गाय ॥ ३ ॥

शिवशेखरशशिचन्द्रिकासचयचारुमहासि ।
ददतु मुद मन्दाकिनीतरलतरङ्गपयासि ॥ ४ ॥

नवविकसितकोमलविमलकुवलयललितमहासि ।
ददतु मुद दिनकरसुतातरलतरङ्गपयासि ॥ ५ ॥

अधुना मधुना मधुरे कुसुमितकुञ्जे श्रिय दधतीम् ।
यमुनाममुना न नता किमु नाकनदीसगी शिरसा ॥ ६ ॥

कमलामलमनुरागि वह करुणारसपरिणामि ।
हृदयस्थलमिव वीक्षित हरेरह प्रणमामि ॥ ७ ॥

---

१ अत्र सिन्दूरशब्दस्य कल्याणरूपत्वान्न तगणदोष २ प्राचीनगज गणेशमिति यावत् ३ एकलिङ्गनामा शिवो मेवाडदेशे प्रसिद्ध सोऽस्य ज्ञातिदैवतम् ४ इद दोहानाम मात्राछन्द । एवमग्रेऽपि ५ अमुना शिरसा यमुनां न नता किम्विति योजना ६ कमल लक्ष्मीश्च ७ रक्तिमरत्नमयम्

पाण्डित्यसौजन्यकृपाचरुभ्यः संसारतापापहृतौ तरुभ्यः ।
धूपार्थमानीतवरागुरुभ्यो नमो गुरुभ्यो धिपणागुरुभ्यः ॥ ८ ॥

[1]परमपवित्राचरितं [2]कलितापहतिव्रतोल्लासम् ।
अनुमोदितस[3]द्बन्धं सज्जनमिव दुर्जनं वन्दे[4] ॥ ९ ॥

अयि ललन्तु वचनानि मम मृदुलयमकरुचिराणि ।
**जयनगरी**वर्णनामिदं सपदि समापय वाणि ॥ १० ॥

## अथ ग्रन्थारम्भः ।

उपलनिर्मितसुन्दरकुट्टिमान्तरविकुट्टितविस्तृतपद्धति ।
**जयपुरं** ललितं कलितं मुदा प्रवरया वरयानगतागतम् ॥ ११ ॥

पटु[5]चैतुष्पटिचारुचतुष्पथं गगनगामिलसत्पुरुगोपुरम् ।
जयपुरं पुरुहूतपुरोपमं [6]सुनयनानयनानयनागरम् ॥ १२ ॥

[7]कृतकधूमजदीपपरम्पराकवलितोग्रतमःप्रसरं निशि ।
जयपुरं ललनाजनविभ्रमैः समदनं मदनन्दितकामुकम् ॥ १३ ॥

जयपुरं भुवि भाति समुन्नतामलनिकेतनदीपकपङ्क्तिभिः ।
निशि कृतोत्सवबा[8]हुलपर्वबद्धततमस्ततमस्तमितानयम् ॥ १४ ॥

विपुलकुण्डमहाजलयन्त्रकच्युतविसारितुषारविराजितम् ।
विजयते जयपत्तनमृद्धिभिर्भुवि लसद्बि[9]लसज्जधनोच्चयम् ॥ १५ ॥

प्रतिदिनं प्रतिमार्जितसत्पथं जयपुरं कृतनीरनिषेचनम् ।
समवितं प्रभुणा गुणसंग्रहे सरतिना रतिनायककान्तिना ॥ १६ ॥

गगनचुम्बिगवाक्षचमत्कृतप्रियतमाननचन्द्रसमुज्ज्वलम् ।
जयपुरं परमोत्सवसंगतैः [10]शुभवनैर्भवनैः परिमण्डितम् ॥ १७ ॥

---

१. अतिपूतमत्यपूत च. २. कलितापस्य हतिव्रते, कलितोऽपहतिव्रत उल्लासो येन तं च. ३. सद्बन्ध' सद्ग्रन्थः सतां बन्धन च. ४. 'अस्तिर्भवन्तीपरोऽप्रयुज्यमानोप्यस्ति' इति महाभाष्यात् अस्तीत्यध्याहार्यम्. ५. चतुष्पटिर्द्यूतपटस्तद्वत्. ६. सुनयनानयनैरनया नीतिच्युता नागरा यस्मिन्. एतेन स्त्रीणामत्यन्तसौन्दर्यं व्यज्यते. ७. 'ग्यास' इति प्रसिद्धो धूमविशेषः. ८. दीपावलीमहोत्सवः. ९. बिलेषु गृहान्तःकोशेषु. १०. बहुव्रीहिः. वनानि निष्कुटानि.

सितघनायितमन्दिरजालिकान्तरतडित्स्फुरणायितयौवते ।
जयपुरे विहरन्ति महाशया वसुमदा॰ सुमदामधरा नरा॰ ॥ १८ ॥
जयपुर जयसिंहविनिर्मित जनितरागतरांगमनोरमम् ।
अतिथिसत्कृतितत्परपूरुष धनवधूनवधूपितमन्दिरम् ॥ १९ ॥
धनिकलोकनिकेतनकेतनप्रचलदञ्चलतो लिखतीव खम् ।
जयपुर ततिभिर्निभृत नृणा सवयसा वयसामपि पञ्जरै ॥ २० ॥
मसृणहिङ्गुलरागलिपिच्छलाङ्कृततनुत्रमिद जयपत्तनम् ।
निजरुचा परिजेतुमसशय दिविषदा विपदा पुरमिच्छति ॥ २१ ॥
अगणितैर्वसुभि समधिष्ठिता हरिसमूहकृतानिशचङ्क्रमा ।
जयपुरी विभवैरमरावतीं विहसतीह सतीशतमकुला ॥ २२ ॥
सुरभिपुष्पकचित्ररथान्तरज्वलितपुण्यजनव्रजराजिताम् ।
जयपुरी मिपतामिति कल्पना किमलकाऽमलकामकलाकुला ॥ २३ ॥
अतिविलक्षणलक्षणलक्षिता ललितगीतिगतिस्फुटमङ्गला ।
जयपुरी महती महिता हिता महिमतो हिमतोपितमानवा ॥ २४ ॥
सविजया विजयामदसमदद्विर्जपुरी द्विजभक्षितमोदका ।
जयपुरी श्रुतिधर्मपरैर्नरै सुकलिता कलितापहरक्रमा ॥ २५ ॥
कुशलकान्दविकापणपूरितानुपममोदकमोदकमञ्जुला ।
जयपुरी दधती नटनर्तकीरसकला सकला सकलादका ॥ २६ ॥
जयपुरी पुरुनिर्झरनिर्जरच्छुरितगालवसिद्धमहाश्रमा ।
जयति मौक्तिकदुर्गतटोच्छसत्सुमुखसमुखसस्थितवाटिका ॥ २७ ॥
सुघटघाटतटस्फुटनन्दनोपमितरूपनिवाससुवासिता ।
जयपुरी क्रयविक्रयशोभया किल सिता लसिताखिलनागरा ॥ २८ ॥

---

१ तगगास्तडागा २ वेश्या ३ द्रव्याणि देवविशेषाश्च ४ अश्वा इन्द्रादयश्च ५ मनोज्ञपुष्पकसदृशकविचित्रग्था सुगन्धि पुष्पकविमानचित्ररथोपवने च ६ सुकृतिनो यक्षाश्च ७ भङ्गा ८ ब्रह्मपुरी नाम काचिज्जयपुरोत्तरभागे तत्सान्तेर लघ्वी पुरी ९ आपूपिका 'हल्वाई' इति प्र॰ १० पश्यतोहरै सहिता ११ गलतानामा पूर्वभागे कश्चित्सिद्धाश्रम १२ मोतीडूंगरी' इति दक्षिणभागप्रसिद्धे दुर्ग, सुमुखो गणेश १३. घाट पूर्वभागे कुञ्जवृक्षावारामगतशोभो स्थानविशेष १४ आरामविशेष

परमपद्धतिपांशुविवेचनाधिगतरत्नविपोपितपामरा ।
जयपुरी धनधान्यचमत्कृतिप्रकृतिराकृतिराजितकुञ्जरा ॥ २९ ॥
तरलतुङ्गतरङ्गघटाछटाप्रकटतालकतालकटोरिका[1] ।
जगति भाति जयादिपुरी यथा समुकुटा मुकुटालय[2]लोलया ॥ ३० ॥
जयपुरं धुतनीरसमीरणैर्विकचरैरामनिवास[3]विलासिभिः ।
भवति हन्त वसन्तसमागमभ्रमकरं मकरन्दधुरंधरैः ॥ ३१ ॥
जयपुरी सलिलाय पुरन्ध्रिभिः सह सखीभिरुपासितकूपिका ।
मुखरिता तदवेक्षणलोलहृद्युवकदम्बकदन्तकथानकैः ॥ ३२ ॥
जयति कच्छ[4]पुरी जगतीतले छदिविराजितमत्तमयूरिका ।
हरितकाचगृहद्युतिभिः क्वचित्सहरिता हरितालविचित्रिता ॥ ३३ ॥
अहह[5] वर्षति राजवलाहको जयपुरे परितः पुरु जीवनम् ।
इदमतो हिमभूधरभूस्थलादधिचमत्कृतिमत्कृतिमानवम् ॥ ३४ ॥
जयति सा जयपूर्वपुरी र[6]म्भोरुपसि यत्र शुकः प्रतिमन्दिरम् ।
कलगिरा विपरीतरताश्रयं द्रुतमुदन्तमुदश्चति कामिनोः ॥ ३५ ॥
जयपुरी परमायसपञ्जरान्तरनिरुद्धवलिष्ठमृगाधिपा ।
वसुविलासहिता सहिता गृहोपितकपोतकपोतकपङ्क्तिभिः ॥ ३६ ॥
अधिकविस्तृततुङ्गसुर[7]ङ्गिकावलयितद्विपधा[8]वनभूमिका ।
जयपुरी पुरुपद्धतिसंचलत्सहृदया हृदयानि हरत्यसौ ॥ ३७ ॥
जयपुरी सकलर्तुसुखप्रदा स्फुरति सा वहु यत्र विलासिनाम् ।
उपवनभ्रमितभ्रमरीगणो न कुरुतेऽ[9]ङ्कुरुतेन न विक्रियाम् ॥ ३८ ॥
सविधधावितधूमसमुच्छ्वसच्छ[10]कटिकाकृतकोमलचीत्कृतिः ।
जयपुरी परितः सलिलोल्लसन्नव[11]नाला वनलास्यचमत्कृतिः ॥ ३९ ॥

---

१. तालकटोरनामा राजप्रासादान्तर्वर्ती चतुरस्रस्तडागः. २. चन्द्रशालानाम. ३. रामनिवासनाम दक्षिणभागे नव्यं महोपवनम्. ४. अत्रत्या राजानः. ५. आश्चर्ये. ६. राज्ञः. ७. सुरङ्गिका नाम पुरुषदर्शनायोग्यराजपत्नीसंचरणार्थकः प्राकाराकारः प्रासादविशेषः. ८. गजयुद्धभूमिः 'चोगान' इति प्र०. ९. सुन्दरझंकारेण. १०. रेलशकटी. ११. इदानीं जलानयननलिकाः. तासां महत्त्वात्पुंलिङ्गप्रयोगः. घासविशेषो वा.

सुभगसौधविभावितवैभवैरितरसत्पुटभेदनभेदना ।
जयपुरी कटुकैर्नृपविक्रमैरसुतरा सुतरामिह विद्विषाम् ॥ ४० ॥
पथि चलद्धनदा समहेश्वरा परिलसद्विजयौ गैणरक्षिता ।
प्रबलशक्तिधरस्फुटगर्जना शिवपुरीव पुरी जयपूर्विका ॥ ४१ ॥
मधुसनाथमशोकविशोभित सततसङ्गि सुधाशुसमुज्ज्वलम् ।
जयपुर स्मरवैभवसुन्दर स्फुरति भो रतिभोगसुखोत्सवम् ॥ ४२ ॥
विकचपङ्कजजित्वरलोचना रुचिररूपनिरूपितकाश्चना ।
जयपुरे विहरन्ति गृहे गृहे युवतयो बत योजितभूषणा ॥ ४३ ॥
कुसुमपुञ्जपविचित्रितपादप मधुपचित्रचरित्रमितस्ततः ।
जयपुर मदनोदयसाधन किमधुना मधुना न समं सखे ॥ ४४ ॥
जयपुरे परिवारविबोधित समधिक कलहान्तरितागण ।
गमयति श्रमत शयने निशा सकुसुमे कुसुमेषुशरार्दित ॥ ४५ ॥
मम कृते चल शिक्षय त शठ कुरु चिर रुचिर सुरत तया ।
जयपुरे स्वसखीमिति याचते न रमणी रमणीयगुणापि का ॥ ४६ ॥
जयपुरे प्रतिसद्म सखीजनै रमय कान्तमिति प्रतिबोधिता ।
कमनकेलिगृह निशि न स्वय सरति का रतिकामनया वधू ॥ ४७ ॥
जयपुरे तरुणी तरुणस्पृहा व्युपितमम्बु समाप्य यथातथा ।
सरति नीरकृते दधती घटीं शिरसि का रमिका न सरस्तटीम् ॥ ४८ ॥
जयपुरे ललना ललन बहि स्थितमवेत्य हठादिति पृच्छति ।
कथय तथ्यमह यदि ते प्रिया रसिकयाऽसि कयाऽद्य निमन्त्रित ॥४९॥
जयपुरे मयविस्मयकारिणि प्रतिनिकायमकायविहारिणि ।
निशि धिनोति निवेश्य कुचौ रसादुरसि का रसिका रसिक न कम्॥५०॥
जयपुर युवभिर्युतमुद्धतैस्त्वमधुनालि नवामि तदुच्यसे ।
पथि पथि प्रभया दधती नृणा मनसि मा भ्रम मांभ्रममन्वहम् ॥ ५१ ॥

१ कुबेरो मदान्यश्च २ शिवो महाजनश्च ३ पार्वतीमपी जयश्च ४ प्रमथादी साधिकाश्च ५ गुहोऽश्वाधाराश्च ६ मद्य वसन्तश्च क्षौद्र वा ७ 'रुद्वी' इति प्र० द्व्यक्षिरणाश्च द्रश्च ८ येन केनापि प्रकारेण ९ अनङ्ग १० एकमीभ्रान्तिम्

सरसमानसमानितमानिनीजनतरङ्गितरङ्गमनोहरा ।
जयपुरी नवनिष्कुटकान्तिभिः स्मराहिता रहिता दुरितोत्तरैः ॥ ५२ ॥

जयपुरे रसरासमुखे निशि क्वचिदहो[1] दयिता दयिताः प्रति ।
इति वदन्ति रुषं परिमुच्य किं न मदिरा मदिराक्षि निपीयते ॥ ५३ ॥

कमलयाऽमलया समलंकृतं सुपवनोपवनोदितसौरभम् ।
जयति भूरिजलं जयभूपितं सुनगरं नगराञ्जितमण्डलम् ॥ ५४ ॥

ध्वजपरिस्फुरदिन्दिरमन्दिरं परमदुर्गमदुर्गमहोद्धुरम् ।
जयपुरं हयपूरपरिक्रमं शरणदं रणदं प्रतिपाक्षिणाम् ॥ ५५ ॥

कनकतोरणराजिपरिष्कृतैः सुकृतिनां कृतिनां गृहिणां गृहैः ।
क्षिपति कं न हि विस्मयसागरे विसदृशं[2] सदृशं[3] जयपत्तनम् ॥ ५६ ॥

नृपपुरंदरमन्दिरचन्दिरद्युति पुरंदरपत्तनतोऽधिकम् ।
पुरु परं दरकारि रिपोरिदं जयपुरं दरदेक्षण[4]सैनिकम् ॥ ५७ ॥

सुदृढसंवरणं हरणं भियां प्रवरसंसरणं श्रयणं श्रियाम् ।
नृपसदाचरणं भरणं नृणां जयपुरं शरणं शरणार्थिनाम् ॥ ५८ ॥

जयपुरं हतसिंहमितस्ततः प्रबलबाहुज[5]बाहुजवैः शरैः ।
जटक[6]हट्टगरत्नझलत्कृतैर्वितिमिरं तिमिराञ्जितपल्वलम् ॥ ५९ ॥

नृपयशोभिरखण्डशरत्कलानिधिकलाधिकलाघवकारिणि ।
जयपुरेऽधिगृहं गृहमेधिनां सुजनता जनतासुखदायिनी ॥ ६० ॥

सकलया कलया किल शिल्पिभी रचितयाऽर्चितयालयमालया ।
जयपुरं जयति क्षितिमण्डले विमलया मलयाद्रिगुणाढ्यया ॥ ६१ ॥

मृगदृशां कटिमध्यपिनद्धया रसनया सनया[7] कृतझंकृतिः ।
जयपुरी जयतीह यदङ्किता वसुमती सुमतीश्वरपालिता ॥ ६२ ॥

---

१. एतेन तादृशव्यवहारस्यासार्वत्रिकत्वद्योतनमुखेन क्षत्रियादिविषयत्वं व्यज्यते. २. निरुपमम्. ३. सनेत्रकमिति पुरुषविशेषणम्. ४. हिङ्गुलवत्. ५. क्षत्रियनाम. ६. 'जडिया' इति प्रसिद्धाः शिल्पिनः. ७. इदं पुरीविशेषणम्.

दृढमुदर्शनदुर्गसुदर्शना गतरुजा तरुजालहतातपा ।
जयपुरी स्वपदातिपरम्परारुचिरताचिरतापितशात्रवा ॥ ६३ ॥
विततमालतमालफणिच्छदा मधुरसाधुरसाविह पश्यताम् ।
जयपुरी मुदमातनुतेऽधिक विनयतो न यतोऽस्ति समुज्झिता ॥ ६४ ॥
पुरवधूनिकरेण निषेविता विहरता हरता युवमानसम् ।
जयपुरी कमनीयसमीरणोदवसिता वशिताखिलनागरा ॥ ६५ ॥
जयपुरी कलकाञ्चनकेतकैर्वितनुतेऽतनुतेज इह स्फुटम् ।
रसमुद समुदञ्चितसुभ्रुवा न किल किं किलकिञ्चितकेलिभि ॥ ६६ ॥
अनिशरक्षितपश्चिमगोपुरा हनुमताऽनुमता सुखमीप्सताम् ।
जयपुरी रुचिरा नृपसद्मभि स्थैरजनीरजनीरसुगन्धिभि ॥ ६७ ॥
विदधती स्वगुणैरतिविस्मित कुवलय बलयन्त्रदुरासदा ।
जयपुरी कुतुकालयलीलयाऽद्भुततरा ततरामपराक्रमा ॥ ६८ ॥
युवपरम्परया युवतीकथानिरतया रतयापितनिद्रया ।
जयपुरी सहिता जगति स्तुता मतिमता स्तिमिताक्षियुगाश्रिया ॥ ६९ ॥
सविबुधा विबुधा बहुभोगिना विततिभिर्निभृता नृभृताशया ।
जयपुरी बत सम्प्रति शोभते त्रिजगती जगतीमिव सश्रिता ॥ ७० ॥
जयपुरे पथि यन्तृभिरुह्यते गजबल जवलङ्घितयन्त्रणम् ।
लसति किंच ततिर्हयजीविना स्पृहयता हयताण्डववेतनम् ॥ ७१ ॥
स्मितकथास्वपि सत्यमिताक्षरा समधिक समधीतमिताक्षरा ।
जयपुरे जयति द्विजमण्डली शमरसाऽमरैसाधनतत्परा ॥ ७२ ॥

---

१ एतत्सञ्ज्ञकोऽस्त्यत्र महादुर्गं २ प्रथमान्त पुरीविशेषणम् ३ 'पलटन' इति प्रसिद्धा तस्या रुचिरता सज्जवरूपा तया ४ विततमालास्तमालच्छदा 'तमाखू' इति प्रसिद्धा फणिच्छदास्ताम्बूलदलानि च यस्याम् ५. कमनीय समीरणोदवसित 'हवामहल' इति प्रसिद्ध सौध यस्याम् ६ दानविशेष ७ स्थलज यन्नीरज कमल 'गुलाब' इति प्रसिद्ध तस्य नीर सुगन्धीनि रल्योरभेदाद्यमकाभिसधि ८ 'तोप' इति 'बन्दूक' इति प्रसिद्धे ९ 'म्यूजियम्' इत्यादीनाम् १० असाध्विदमिति न भ्रमितव्यम् ११. 'चाबुकसवार' इति प्रसिद्धानाम् १२ देवपूजनादावमरकोशशोधनादौ च

उपवने पवनेन शनैः शनैः प्रचलता च लतासु निपेवितम् ।
विविधशिल्पगृहं जयपत्तनं भृशतरं [2]शैतरञ्जकुतूहलम् ॥ ७३ ॥
निगमदुर्गमवाग्भटवाग्भटाश्चरकसुश्रुतसुश्रुतवृन्दयः ।
जयपुरे कति नो भिपजो महौपधवला धवलाद्भुतकीर्तयः ॥ ७४ ॥
कनकपञ्जरमध्यकलक्कणच्छुकपिके कपिकेलिधुतद्रुमे ।
जयपुरे कति सन्ति न दीर्घिका मधुरसाधुरसा वद [3]दीर्घिकाः ॥ ७५ ॥
जयपुरी विहरद्बहुसज्जना कुलवधूकुललक्षितलज्जना ।
पथि परस्परसङ्गनेमज्जना चतुरमानसमानसमज्जना ॥ ७६ ॥
जयपुरी व्यभिचारविवर्जना कठिनदण्डतिरस्कृतदुर्जना ।
प्रकटितप्रतिपक्षवितर्जना भुवि विराजति वित्तसदर्जना ॥ ७७ ॥
प्रतिगृहं सदुपस्करयोजना यजनतोपितसर्वनभोजना ।
धनिककल्पितकाननभोजना जयपुरी न विभाति न भो जनाः ॥ ७८ ॥
जयपुरं वसुधामहितालयं नवसुधामहितालयमप्यलम् ।
समतया रचिताखिलचत्वरं नरचिताखिलचत्वरमप्यहो ॥ ७९ ॥
स्वबलदर्पितवीरभटोत्कटाद्द्रविणसारसमुल्लसितप्रजात् ।
जयपुरात्पुरुरामगुणोदयादिह परा नगरी न गरीयसी ॥ ८० ॥
सकलभूवलये भ्रमितं पुनः पुनरहोभिरहो बहुभिर्मया ।
जयपुरीसदृशी सदृपिप्रजावनपरा न परापि पुरीक्षिता ॥ ८१ ॥
भवति तस्य कवेर्विषया गिरां जयपुरी छलिदर्शितकौतुका ।
प्रतिपथं विषवैद्यविनर्तितद्विरसना रसनाशतमानने ॥ ८२ ॥

एषा श्रीमथुरेव विस्फुरितसद्वृन्दावना संततं
काशीव स्फुटविश्वनाथनिलया स्फीतान्नपूर्णापि च ।

---

१. लतावच्छेदेन. २. क्रीडनविशेषः. ३. लम्बायमानाः. ४. लज्जन लज्जा. ५. रीतिरवैषात्रत्या. ६. देवाः. ७. 'गोठ' इति प्र०. ८. वसुधामानो हिताश्चालया यत्र. वसुधया महिता आलया यत्रेति वा. वसुधायामिति वा. वसुधामेति पृथक्पदं वा. ९. छलिनो मायिकाः. १०. यस्येत्यध्याहार्यम्.

किंच द्वारवतीव सोद्भवबलाऽयोध्येव रामोदया
सकीर्णा धनिना गृहैर्जयपुरी जागर्ति सर्वोपरि ॥ ८३ ॥
श्रीमत्कुन्दननन्दनवैद्यश्रीकृष्णरामकविरचिते ।
जयपुरविलासकाव्ये सपूर्ण' प्रथम उल्लास ॥ १ ॥

## द्वितीय उल्लासः ।

केवल दधति यत्र नो भटा केवल प्रकृतितत्परो नृप' ।
केऽवलम्बितमुदो न नागरा केव लङ्घयति योषिदार्जवम् ॥ १ ॥
पुराङ्गना यत्र ललन्ति मेनकामतीत्य कदर्पकलागमे न का ।
हसन्त्यहो गीतिगुणेषु किनराननारत गीतिविदो न किं नरा ॥ २ ॥
विलासिनो बिभ्रति यत्र समद भटाश्च दृप्ता युधि साहस मदम् ।
मृगीदृशा कान्तकटाक्षकौतुक प्रबुद्धकाम न करोति कौ तु कम् ॥ ३ ॥
विलोभयन्यत्र वधूमनारत क कामुको नेच्छति तन्मना रतम् ।
निकेतन जाललसत्प्रभञ्जन धिनोति केलिग्लपितप्रभ जनम् ॥ ४ ॥
अपूर्वमेतज्जयपूर्पत्तन गृहे गृहे राजितमत्तवारणम् ।
क्षणे क्षणे सक्षणमुग्ररक्षण विराजते राजितमत्तवारणम् ॥ ५ ॥
दु शासनस्फूर्ति सुशासनस्फुरा कुरूपसेव्य वररूपसपदा ।
सखेऽधुना श्रीजयपत्तनेन तद्विहस्यते हास्तिनपत्तन न किम् ॥ ६ ॥
अन्त सदानन्दिनिनादकौतुक स्फुरत्सुधाशुच्छुरित समन्तत ।
क्रीडत्कुमार जयपत्तन स्तुवे कैलासवत्सज्जितसर्वमङ्गलम् ॥ ७ ॥
अलकृत कुण्डलिमण्डलीभि समुल्लसत्तक्षककर्मचित्रम् ।
परैरगम्य बलिसद्मरम्य न श्लाघ्यते श्रीजयपत्तन क ॥ ८ ॥
यत्राग्रहर्म्याणि नभोलिहानि सानन्दमारुह्य विलासवत्य ।
ज्योत्स्ना वहद्भिर्वदनै समन्तात्सहस्रचन्द्र वियदारभन्ते ॥ ९ ॥

---

१ 'नेष्ट गुरो द्वारवतीत्वमासीत्' इति माघकाव्ये (स ३ श्लो० ६९) प्रयोगान्न दीर्घ २ श्रीराघवो रामसिहश्च ३ वर्तते ४ पृथिव्याम् ५ कह ६ राजितानि मत्तवारणानि 'दारुमयानि गृहाहानि यत्र ७ शोभितमत्तदन्ति ८ तृतीयान्तम् ९ कुण्डलवन्त सपाश्च १० सर्पविशेषो वधकिश्च

स्फुरत्सुधेङ्गालविलेपनेन श्रीकच्छराजो जयपत्तनस्य ।
निवारणार्थं जनदृष्टिदोषं चिन्हं सखे कारयतीति मन्ये ॥ १० ॥
उत्तमजनसंसर्गादनुत्तमोऽप्युत्तमो भवति ।
कालः पुनरिङ्गालः[1] सुधया जयपत्तनं प्रसाधयति ॥ ११ ॥
द्रुमवदपि विद्रुम[2]द्युति सम्रमदमपीह विभ्रमदम्[3] ।
सर्वत्र सभोदय[4]मपि विभोदयं[5] भाति जयनगरम् ॥ १२ ॥
अध्वन्यपि परमध्वनि भूस्थितमपि नाकविस्फूर्ति ।
उपवनसुखमपि जयपुरमनुपवनसुखं वयं विद्मः ॥ १३ ॥
एकेन पाक[6]शासनगुरुणा पुरु गौरवं दधत्स्वर्गः ।
हसितः सपाक[7]शासनगुरुनिकरेण जयनगरेण ॥ १४ ॥
कैलासमिव सद्दुर्गं[8] पातालमिव बहुभोगि[9]चङ्क्रमणम् ।
नाकमिव विबुधविभवं श्रीजयनगरं वयं ब्रूमः ॥ १५ ॥
मौक्तिकमिव सद्वृत्तं घनरसमिव सर्वतोमुखं[10] स्फुरति ।
जयपुटभेदनमन्तर्गतनीरं नारिकेरमिव ॥ १६ ॥
गोष्ठमिव वृषविहारं जलधिजठरमिव सरत्नगम्भीरम् ।
श्रीकण्ठकलेवरमिव निबद्धनागं विभाति जयनगरम् ॥ १७ ॥
काव्यमिव लसदलंकृति[11] कुलटास्वान्तमिव कामुकाक्रान्तम् ।
भारतमिव भीमभटं श्रीजयनगरं समुल्लसति ॥ १८ ॥
शङ्खमिव जयध्वनितं वैद्यस्थानमिव नागरो[12]द्भासि ।
उपवनमिव सुरभितटं जयनगरं को न जानीते ॥ १९ ॥
दुग्धमिव सारसुभगं मेरुशिखरमिव सुवर्णविद्योति ।
वनमिव वानरबहुलं भकुलमिवाम्बरै[13]र्विलासि जयनगरम् ॥ २० ॥

---

१. इङ्गाल. कोकिले इति वैद्यके प्र०. २. रक्तरूपम्. ३. द्विजहर्षम्. ४. 'रामसभार्यसमाजजैनसभा' इत्यादीनाम्. ५. विशिष्टकान्त्युदयम्. ६. बृहस्पतिना. ७. सपाकं शासनं येषां तादृशानां गुरूणा निकरो यत्र. ८. दुर्गा पार्वती. दुर्गः 'किल्ला' इति प्र०. ९. भोगिनो विटाः सर्पाश्च. १०. सप्तद्वारत्वादस्य. ११. अनुप्रासोपमादयोऽलमतिशयिताः कृतिनोऽलंकारा वा यस्मिन्. १२. शुण्ठी पौराश्च. १३. आकाशे वस्त्रैश्च.

उष्णकिरणमण्डलमिव जयनगरं कुवलयोल्लासि ।
शीतकिरणमण्डलमिव परिस्फुरति पैर्वपरिपूर्णम् ॥ २१ ॥
सुगमिव जगदनुकूलं व्रजमण्डलमिव लसन्महानन्दम् ।
ब्रह्मेव निर्विकारं श्रीजयपुटभेदनं भाति ॥ २२ ॥
कंज मिव जयपुरमिदं सदालिरवरञ्जितं मञ्जु ।
कुञ्जरकपोलतलमिव समधिकदानरुचिरञ्जयति ॥ २३ ॥
सजितहिरण्यगर्भं जयनगरं सत्यलोकमिव ।
वैकुण्ठमिव विराजितमाधववैभवमहं मन्ये ॥ २४ ॥
श्रीरामबद्धमार्गं प्रकटितपरभङ्गमच्छमर्यादम् ।
जयति सदानवविभवं जयनगरं नीरनिधिस्तुपमम् ॥ २५ ॥
राजीवराजिभवनं द्विजराजोच्चरितकौमुदीमुखरम् ।
विमलविकासितरङ्गं श्रीजयनगरं नदीनविच्छित्ति ॥ २६ ॥
उल्लसदनन्तभोगाधिरूढमाधवचमत्कारि ।
जगति जयति जयनगरं वद मित्र समानसागरं नहि किम्॥२७॥
मरुदाप्युम्बितरम्भं स्फुरितरुचिरमाराचितलीलम् ।
स्वरिव जयति जयपत्तनमुपकण्ठगनीलकण्ठकृतनृत्तम् ॥ २८ ॥
शिल्पचतुरप्रजापति समुदञ्चितमाधवेशमाहात्म्यम् ।
विस्फुरितजीवजातं ब्रह्माण्डीयाति जगत्सु जयनगरम् ॥ २९ ॥

---

१ कमलानि भूवलय च २ पूर्णमायामुत्सवैश्च ३ सत्पङ्क्तिभिरलिभिश्च ४ रुच्यन्त रम्भा यत्र वा पदम् ५ श्रीविष्णु श्रीमहाराजश्च ६ रामो रामसिंहश्च तेन बद्धो मार्गो यत्र ७ तादृश पराजयश्च ८ दानवविभवसहित सदा नवो विभवो यत्र ९ राजीवानां मत्स्यविशेषाणां राजीना भवनम् कमलानां राजयो यत्र तथाभूतानि भवनानि यस्येति च १० विकासित-तरङ्ग विकासित-रङ्ग च ११ समुद्रसमानम् न दीना तुच्छा विच्छित्तिश्शोभा यस्य न दीनानामनाथानां विच्छित्तिर्विरहिता यत्रेति वा 'सुप्सुपा' इति समास १२ समुद्रतुल्य मानसागराख्यतडागसहित च १३ बालो देवाश्च १४ मरुदी अप्सरसश्च १५ स्फुरितरु, स्फुरितरुचि, स्फुरितरुचिरम्, स्फुरितरुचिरमाराचितलीलम्, स्फुरितरुचिर-मार-चितलीलम्, इत्यनेकधा पदानि छित्वार्थं ज्ञाय १६ शिवो मयूराश्च

अव्यभिचारं सव्यभिचारिणमपदुष्टि दूषणोल्लासम् ।
सरसं सरसाभासं जयपुरमुपहसति माम्मटं [1]ग्रन्थम् ॥ ३० ॥

उपवनतलविकचतगर पथि पथि विषवैद्यनर्तिताजगर ।
निजरुचिजितनिखिलनगर नगराचितसुख जय जयनगर ॥ ३१ ॥

मङ्गलमयरवमुखरितं मञ्जुलकान्तिविलोभि ।
जयनगरं मञ्जीरमिव गानसमयपरिशोभि ॥ ३२ ॥

जयनगरं मन्यामहे वयं विलक्षणरीति ।
चित्रोल्लासि विचित्रमथ नीतिसमेत[2]मनीति ॥ ३३ ॥

[3]व्याकुलता जयपत्तने नोपवनादपरत्र ।
[4]सरोगता कमलैर्विना भाति न कुत्रचिदत्र ॥ ३४ ॥

[5]प्रतारणं नावं विना जयनगरे न चकास्ति ।
निरन्तरं दृढमुष्टिता विना खड्गमिह नास्ति ॥ ३५ ॥

किं बहुना मम तत्त्वतो मतमिदमद्य कवे [6]हि ।
जयपत्तनम[7]म्बावतीतनयायितमवधेहि ॥ ३६ ॥

स्थाने रत्नाकरं जाने पत्तनं जयपूर्वकम् ।
यन्माधवः [8]श्रियाशेषभोगभागिह दीव्यति ॥ ३७ ॥

विभाति [9]दुर्गाङ्कसमुल्लसद्गुहं सिन्दूरचित्रोज्ज्वलकुञ्जराननम् ।
विभूतिरोचिष्णु हि[10]मालयोदयं कैलाससंपज्जयपूर्वपत्तनम् ॥ ३८ ॥

निशम्य [11]गोविन्दपदप्रसङ्गतः समुन्मिषन्तीं जयपत्तनश्रियम् ।
नाकोपि [12]नाकं किमुपैति लज्जया लङ्काप्यलं कातरभावमृच्छति ॥ ३९ ॥

---

१. काव्यप्रकाशम्. २. ईतिरहितम्. ३. विभिः पक्षिभिः ४. सरोवरगत्वम्. रोगसाहित्यं च. ५. वञ्चनं तीरप्रापणं च. ६. अनुप्रासपूर्त्यर्थकोऽत्र हिः. ७. अम्बावती नाम जयपुरादुत्तरभागेऽत्रत्यभूभुजां पूर्वा राजधानी. ८. अशेष०. शेष०. ९. पार्वत्यङ्कशोभितकार्तिकेयम्. दुर्गभूमिषु विलसन्त्यो गुहा यत्रेति च. १०. हि निश्चयेन मालयोदयमिति पुरपक्षे पदच्छेदः. ११. श्रीगोविन्ददेवोऽत्रत्यमहाराजस्य कुलेष्टदैवतम्. १२. अक दुःखं नोपैति किमिति काकुः. एवमग्रेपि.

वीरा वल्गदुर्जितसत्सग्रामा ग्रामाधीशा समधिकधैर्याधारा ।
धारास्फीतश्रियमवलम्ब्यासि हा सिहानाराजयपुरसौम्नि भ्रमन्ति ॥ ४० ॥
शूरा सन्ति स्फुटविलसत्सौजन्या जैन्यारम्भज्वलितमह सबाधा ।
बाधामुक्ता परिचरितश्रीदुर्गा दुर्गाध्यक्षा जयपुररक्षादक्षा ॥ ४१ ॥
धर्माचाराचरितयशोव्यापारा पारावाराधिकधृतय. सद्गोत्रा. ।
गोत्रैरख्याता जयनगरीवास्तव्या स्तव्या केषा कथय कवीना न स्यु ॥
विभ्राजन्ते जयपुरि सत्कदर्पा दर्पाकारा कलितमनोज्ञारामा ।
रामासार्धं सह कृतमिष्टाहारा हारानुच्चैरुरसि दधाना पौरा ॥ ४३ ॥
साय काले स्फुरदभिसारारम्भा रम्भारम्या जयनगरे सामान्या ।
मान्या यूना मदनकलासयोगा योगासक्तानपि वशगान्कुर्वन्ति ॥ ४४ ॥

दृश्यन्ते निभृता लतासु मधुपा' शुष्यन्ति पौरापद
किं च श्रीजयपत्तने मृगदृशामाभाति वक्रच्छटा ।
काश्मीरागरुपिष्टिका नरपतेर्विभ्राति कीर्तिर्जग-
ज्जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ४५ ॥

भाति श्रीजयपत्तने परिसरेष्वारामजात स्फुर-
द्धारासद्म समीरलोललहरीगम्भीरनीर सर ।
राजद्राजगृहाङ्गण गजमदै सौधच्छटाकल्पन
जम्बूमज्जलबिन्दुमज्जलजवज्जम्बालवज्जालवत् ॥ ४६ ॥

विद्यन्ते विकचा लता न वनिता कम्प पताकावली
धत्ते नैव पताकिनी करटिनो मत्ता न पौरा क्वचित् ।
कूपा भूरिजलाशया नहि पुन सामन्तभूपा सदा
पूर्णा मत्यहमृद्धयो जयपुरे कुत्रापि नापत्तय ॥ ४७ ॥

पद्मे पङ्कजता व्रते निरशन स्त्रीणा भ्रुवोर्वक्रता
शस्त्रे तैक्ष्ण्यमिभे मद कितवता मत्तूरनाम्नि द्रुमे ।

१ सिंहावलोकनरीतिरियं माघकिरातानुसारिणी २ उत्साहे ३ युद्धस्य
४ पृथिव्याम् ५ समस्यापूर्तिरियम् 'तेन तुल्यम्' इत्यत्र वति ६ 'तदस्या–' इति
मतुप् ७ विरसिना केसरादिताश्च ८ डलयोरभेदोऽत्र ज्ञेय

मान्द्यं हंसगतावलौ मधुपता सूतागमे मूर्छनं
भङ्गः किं च सरोवरे जयपुरे पौरेषु नैव क्वचित् ॥ ४८ ॥

यस्यान्तः स्तिमिताः श्रियो द्विजपतिश्रेणी कलङ्कोज्झिता
किं च स्फारसुधासमृद्धिरनिशं श्रीमाधवो माद्यति ।
दुर्धर्षं जयपत्तनं जडनिधेर्ज्यायो जरीजृम्भते
किं त्वेतत्कथमित्यहं न कलये यत्पङ्किलं न क्वचित् ॥ ४९ ॥

किं रत्नानि न सन्ति किं न हरयोऽप्युच्चैःश्रवःस्पर्धिनः
किं गम्भीरतया न भाति भुवने लक्ष्मीं न धत्ते किमु ।
सत्यस्मिञ्जयपत्तने जडनिधिर्वल्गन्वृथा गर्जति
स्याद्गर्वो यदि माधवाश्रयतया सोऽप्यत्र विस्फूर्जति ॥ ५० ॥

व्यावल्गद्बहुवाहिनीमुखरितं सन्नद्धनागं महा-
गम्भीरं विलसत्कलानिधिकलं कच्छाच्छकेलिक्रमम् ।
उच्चैर्भूभृदधिष्ठितं जयपुरं जानामि रत्नाकरं
किं त्वेतन्न कदापि भङ्गमयते नो वा जडैः संभृतम् ॥ ५१ ॥

यां धत्ते जयपत्तनाब्धिरुदरे यामाहुरुच्चैः स्थिरां
यां देवाः स्पृहयन्ति वासवमुखा यां लेभिरे सूरयः ।
यां भुङ्क्ते महनीयचित्रचरितो देवः श्रियं माधव-
स्तां स्तोतुं चतुराननः स चतुरः किं वा स पञ्चाननः ॥ ५२ ॥

कैलासः शिवसंचयेन बहुभिः स्वर्गो वसूनां भरैः
पातालं बलिकोटिभिर्निधिशतैर्यक्षेन्द्रगुप्ता पुरी ।
वैकुण्ठं हरिभिः प्रजापतिगणैः सा सत्यलोकच्छवि-
र्जिग्ये श्रीजयपत्तनेन वहता नामास्थितिं यौगिकीम् ॥ ५३ ॥

संनद्धापि त्रिदशनगरी नन्दनानन्दनव्या
स्पर्धाबन्धं सह जयपुर्या ब्रूहि कस्माद्दधातु ।

---

१. पारदशास्त्रे. २. संस्कारविशेषः. ३. अत्रत्यराजानो जलप्राया देशाश्च. ४. समासान्तविधेरनित्यत्वादप्रत्ययाभावः.

यस्मादस्या समुपवमता श्रोत्रियब्राह्मणाना
भव्यैर्हव्यैस्तदधिपतिरप्यस्ति कुक्षिंभरि स ॥ ५४ ॥

अथ स्थानविशेषवर्णनम् ।

अगणितहाटकमुद्राव्ययेन यदकारि रामसिंहेन ।
रामप्रकाशनाटकनिकेतन कीर्तयामि कौतुकत ॥ ५५ ॥
विलसति हाहाहूहूकौतुककोलाहलालापम् ।
रामप्रकाशनाटकनिकेतन शक्ररङ्गगृहरम्यम् ॥ ५६ ॥
वाता सुवातायनमार्गवाता यत्र श्रम रङ्गसदा हरन्ति ।
तद्विश्वकर्मस्मयहारिशिल्प रामप्रकाश नटवेश्म भाति ॥ ५७ ॥
प्राकारेण समन्ततो वलयित प्राशूल्लसद्गोपुर
नानावर्णविचित्रित सितशिलाखण्डस्फुरत्कुट्टिमम् ।
भास्वत्स्तम्भशताकुल बहुधनैर्मञ्चोच्चयैरञ्चित
श्रीमद्रामनवीननाटकगृह गृण्हाति चक्षूषि न ॥ ५८ ॥
यस्मिन्कृत्रिमधूमदीपपटलीदेदीप्यमानोदरे
सानन्द निशि पारसीकनिकरैर्नृत्य समारभ्यते ।
सोऽय सुन्दरदारुसारफलिकाल्लसाद्वतिप्रोन्नति
श्रीरामस्य नवीननाट्यनिलय स्तोतु कथ शक्यते ॥ ५९ ॥
यस्य प्रान्ते तरङ्गैर्लसति तरलितो राजमल्लस्तडाग
सर्वत्र स्फीतशिल्पमञ्जुरमहिमतो यो नृणा दत्तराग ।
भासा चक्षूषि मुष्णञ्जलनलघटनाप्रोल्लसद्बाह्यभाग
प्रासादस्ताण्डवस्य स्फुरति परिसरालेख्यनिक्षिप्तनाग ॥ ६० ॥
विष्वग्जाल्या समालापितगगनतला सदगत्सौधमाला
नृलोकुर्वद्विशाला सुरपतिविहिता नर्तकीनृत्यशाला ।

---

१ अत्र पुरे महाराजकारित नाटकगृहमुत्तरभागे वर्तते तद्वर्णनम् २ गन्धर्वविशेषा नटानामालापशब्दानुकरण च ३ 'व्यास' इति प्र० ४. राजमल्ल इत्याख्यो महातडाग ५ गगनस्पृश इति भाव

सोल्लासाः सावकाशासनमुदितहृदो यत्र पश्यन्ति रासा-
न्सभ्या रामप्रकाशाभिधमिह जयतान्नाट्यसद्म स्वभासा ॥ ६१ ॥

यस्मिन्नद्भुतभूमिकाजवनिकाः कथ्यानि पथ्यान्यलं
नेपथ्यानि रसानुकूलकनकस्फूर्जद्दुकूलान्यपि ।
गायन्त्यो गणिकास्तिरस्करणिकाश्चातुर्यतूर्याण्यपि
द्योतन्ते तदिदं कुतूहलगृहं राज्ञश्चिरं चक्षतु ॥ ६२ ॥

हंहो मुग्धमृदङ्गमन्द्रविलसन्नादे महानाटक-
प्रासादे क्रियमाणनाट्यमहिमा केषां गिरां गोचरः ।
यस्मिन्नद्रिवनादि यज्जवनिकाचित्रार्पितं वस्तु त-
त्सर्वं सत्यमिव प्रतीतिसरणिं दूरात्समागच्छति ॥ ६३ ॥

कान्ताकान्तास्यतान्ताम्बुजमुकुलमुधासंभवच्चन्द्रशङ्काऽ-
भ्रान्तभ्रान्तस्फुटान्तःश्रमशिथिलगरुच्चक्रचक्रप्रपञ्चः ।
लोलोल्लोलालिलीलाप्रतिफलितसमुन्माद्यदुद्दामनाग-
ग्रासोग्राशोत्थनक्रो जयति जयपुरे राजमल्लस्तडागः ॥ ६४ ॥

तापं सतां स्यतु सुदर्शनचक्रचञ्चुः
पद्मार्चितः परमहंसगणैरुपास्यः ।
नीलामलच्छविरुदञ्चदुदग्रसत्त्वः
श्रीराजमल्लजतटाकवरोऽच्युतश्रीः ॥ ६५ ॥

न्यायव्याकृतिवेदवैद्यकलसत्साहित्यमीमांसिका-
ज्योतिःसांख्यपुराणधर्मविदितैर्विद्वद्भिरुद्द्योतिता ।

---

१. क्रीडाविशेषान्. २. 'पड़दा' इति प्रसिद्धाः. ३. कान्तानां यानि कान्तास्यानि तैस्तान्तानि यान्यम्बुजमुकुलानि तैर्मुधा संभवन्ती या चन्द्रशङ्का तया अभ्रान्ते यानि भ्रान्तानि भ्रमणानि तैः स्फुटान्तःश्रमाणि अत एव शिथिलगरुन्ति यानि चक्रचक्राणि चक्रवाकसमूहास्तेषां प्रपञ्चो यस्मिन् सः । तथा लोलोल्लोलानामालीनां लीलासु प्रतिफलिताः समुन्माद्यन्त उद्दामा ये नागा हस्तिनस्तेषां ग्रासस्योग्राशयोत्था उत्थिता नक्रा मकरा यस्मिन्. ४. षो अन्तकर्मणि. ५. विष्णुसमः स्थिरशोभश्च.

प्रौढच्छात्रपरम्पराविरचितैराम्रेडितैर्घोषिता
धत्ते कस्य न विस्मयं जयपुरे श्रीपाठशाला शुभा ॥ ६६ ॥
लोके पद्धतय पवित्रविभवा सन्त्येव लोकोत्तरा
किं ताभिर्मम भट्टपद्धतिरसावेकैव मान्या मुहुः ।
या विश्वक्रममिश्रिताशयतया दत्त्वा क्षणं यातना-
मद्धा दर्शयते विशेषरुचि तन्नारायणीयं पदम् ॥ ६७ ॥
भट्टविशिखा विशेषाद्बीभत्सचणाऽवधूतचर्येव ।
कर्दमविलाससरसा विभासते देवहूतिरिव ॥ ६८ ॥
जयपुरि मारुतमन्दिरमुदीक्ष्य मुहुरुद्यदिन्दिरोद्द्योतम् ।
स मयोपि विस्मयमयं सदामयश्चित्तविभ्रमाङ्कविता ॥ ६९ ॥
सोपानालीवलयविलसच्छिल्पचण्डेऽत्र कुण्डे
धारायन्त्रोत्पतितपयसा पश्य धारामपाराम् ।
या खं प्राप्य स्फुटयति मरुत्स्फालभिन्ना पतन्ती
दृष्टेर्भ्रान्तिं विरहिजनताभीकरैः सीकरौघैः ॥ ७० ॥
अमन्दा श्रीधारामभिकलय कुण्डान्तरलस-
न्महाधारायन्त्रोच्छलितपरमस्फीतपयसाम् ।
ज्वलद्ग्रीष्मान्तार्जुनशितशराभिन्नवसुधा-
विलोद्भूतर्व्यालालयसरिदुदाराम्बुविभवाम् ॥ ७१ ॥
धूमधूम्राट्टसघट्टा शश्वज्ज्वलितचुल्लिका ।
विक्रीयमाणपक्वान्ना हनुमद्विशिखा स्मृता ॥ ७२ ॥

---

१ महाराजप्रासादसमुपस्थिता संस्कृतपाठशालेत्यर्थः २ रथ्या रामानुजादिमार्गाश्च ३ 'भट्टोंकी गली' इति प्र० रथ्या मीमांसामार्गश्च ४ मूत्रादिदुर्गन्धिपदार्थक्लिन्नतया पशुमांसादिदुर्गन्धिपदार्थमयतया च ५ चित्तग्लानि पशुवधजन्यशरीरचिह्नदर्शनं च ६ अधिकप्रीति गरुडशेषशोभितं च ७ नारायणमन्त्रीयं वैष्णवं च ८ अवधूता अघोरमतानुयायिनः ९ पद्मस्य कपिविशेषस्य च १० 'हवामहल' इति प्रसिद्धम् ११ मध्येवीथि वर्तमाने जलकुण्डे १२ भोगवतीनाम गङ्गा १३ हनुमद्रथ्या 'हनुमन्टी' इति प्र०

[1]भस्मोद्धूलितसारमेयमिथुनव्यालीढभाण्डोच्चया
चुल्ह्यावर्तितशर्कराररसझरीलोभभ्रमन्मक्षिका ।
खर्जूरीशिखया वणिग्भिरधिकं संवीजितव्यञ्जना
धूम्राढ्या हनुमद्गली पथि लुठत्पत्रावली राजते ॥ ७३ ॥
चतुरजनादरणीयं संग्रहभवनं पदार्थरमणीयम् ।
लोकोत्तरकरणीयं केषां वद नाभिसरणीयम् ॥ ७४ ॥
कल्लोलितपताकाग्रं स्फुरत्सोपानसुन्दरम् ।
राधादामोदरस्यास्ते मन्दिरं धेनुचन्दिरम् ॥ ७५ ॥
चटुलचटकचंक्रातिभिश्चमत्कृतं चारुचित्ररोचिष्णु ।
जनताललाटपट्टोल्लिखिततलं वेश्म विश्वनाथस्य ॥ ७६ ॥
वल्गत्तुङ्गतुरंगमा द्विपघटागण्डस्थलप्रस्खल-
द्दानोद्रेकनिषेकपङ्किलपथा दुर्गच्छटादुर्गमा ।
विष्वक्सज्जितसैनिका जयपुरी प्राकारवर्मावृता
जेतुं वैरिपुरीरिवात्तपरिघा स्वःशूलिसद्मच्छलात् ॥ ७७ ॥
दूरादम्वरमात्रदर्शितरुचिर्भ्राम्यन्महाकौशिकैः
स्वर्गः पत्तनपुंगवाज्जयपुरादुच्चैर्भवन्स्पर्धते ।
क्रुद्धेनेति किमीश्वरेण कलये दण्ड्याय तस्मै परं
शूलीं दातुमुदग्रतीक्ष्णशिखरा स्वःशूलिकारोपिता ॥ ७८ ॥
हंहो श्रीजयपत्तने कतिपये पादायुधास्तित्तिरा-
न्मेषानध्वनि योधयन्ति पणतः स्पर्धां दधाना मिथः ।
विम्बोष्ठीमधुरोष्ठचुम्बनरुचो मैरेयमत्ताः परे
प्रोष्ठीमांसमदन्ति वित्तवनितागोष्ठीगरिष्ठा विटाः ॥ ७९ ॥
फूत्कारस्फुटधूमयन्त्रदहनज्वालं करालं रज-
र्तामालं क्वच पीयते क्वचिदपि द्यूतं समारभ्यते ।

१. इद तस्या एव स्वभावोक्त्या वर्णनम्. २. 'म्यूजियम्' इति प्रसिद्धम्. ३. स्वः-शूली 'सर्गासूली' इति प्रसिद्धमत्युच्चं राजसदनम्. ४. शक्र उलूकश्च. ५. ईश्वरेण परमेष्ठिना ईश्वरसिंहाख्यमहाराजेन. ६. तामाखवमित्यर्थः.

मङ्गापाथसि सैपफेनमधिक गायद्भिरुद्राल्यते
मध्येवाटि महाविटैर्जयपुरे मल्लत्वमभ्यस्यते ॥ ८० ॥

उद्वेल्लत्पवरङ्गध्वजपटलहरीमारुतैर्वीज्यमानो
दानोद्रेकप्रसेकभ्रमदलिरलस याति नासीरहस्ती ।
वीरव्यालुष्टवल्गावलयविजलितग्रीवमारब्धटोपा
दूरादुल्लुत्य लत्ता क्षिपति जयपुरे वेगमत्ता हयाली ॥ ८१॥

दीर्घाकारतया कलानिधिकला कीर्णा किमेता पुर
कि वा सौधशिर सु मित्रमणयश्चाकिक्यमातन्वते ।
द्रष्टु श्रीजयपत्तन किमथवा नक्षत्रमालागता
यद्वा कूर्मनृपप्रतापपटली लमा समुद्द्योतते ॥ ८२ ॥

दुर्गाणि ध्वनयन्प्रचण्डमहसो मध्य वय सूचय-
न्प्रासादच्छदितो विहङ्गमिथुनश्रेणी समुड्डाययन् ।
व्यापार परिवर्तयन्द्रविणिना शिल्पोपजीविव्रज
भोज्याय त्वरयन्नुदञ्चति महान्मध्याह्नतोर्पध्वनि ॥ ८३ ॥

द्राक्षामण्डपमण्डित द्रुमशिखाव्यालम्बिलेख पयो-
यन्त्रश्रीमदखर्वपर्वतगृह लीलाशकुन्तध्वनि ।
छायामञ्जुनिकुञ्जपुञ्जजठरभ्राजिष्णुपट्टासन
रम्य रामनिवासमस्ति नृपतेरुद्यानमुद्यानकम् ॥ ८४ ॥

गायन्ति तारस्वरचारु किंनरा श्रुत्वा विधुन्वन्ति शिरो न किं नरा ।
यत्रालवाले विकचा नवा लता यासा मरालैर्मुषिता प्रवालता ॥ ८५ ॥

---

१ आपृक्तम् २ सेनामुख तु नासीरम् ३ टापा पादस्मा 'क्रीडात्तुङ्गतुरङ्ग टापपटली—' इति रसतरङ्गिण्या सप्तमतरङ्गस्योदाहरणमत्र प्रमाणम् ४ दीपावलीवर्णनमिदम् ५ अत्रत्यमहाराजस्य ६ मध्याह्नि नोपध्वनिवर्णनम् ७ श्रेष्ठिजनाना व्यापारो मध्याह्ने परिवर्तन इति रीतिवर्णनम् ८ तुपीहिसायामिति धातो रूपम् ९ रामनिवासनामकस्य दक्षिणभागवर्तिनूतनमहोद्यानस्य वर्णनम् १० द्रुमशिखासु व्यालम्बिनो लेखास्तत्तद्धामप्रकाशकानि पत्राणि यस्मिन्, ११ तत्र गिरिनामक स्थानम् १२ उद्यानानि यस्मिन्

उल्लसत्पवने रामनिवासोपवने नवे।
भाति दूर्वावृतं क्षेत्रं सहरित्कम्बलं यथा ॥ ८६ ॥

पवनेन वीज्यमानाः कम्पितकदलीदलव्यजनजेन।
रतबन्धखेदखिन्ना यत्र युवानः स्वपन्ति कुञ्जेपु ॥ ८७ ॥

[1]छात्रा यत्र स्वगात्रावलितपटपुटास्तार्णभित्तीः प्लवन्ते
केचिद्गच्छन्ति वद्ध्वा दृशमभिकलशं केऽपि गर्ते स्खलन्ति।
नारङ्गादानरङ्गान्दधति सति जये पारितोपं लभन्ते
सोयं खे लोलकेतुर्मम मनसि मुदं लाति खेलोत्सवो वः ॥ ८८ ॥

मोदन्ते मोदकाशा दुरधिगममुपालक्ष्य लक्षं विलक्षा
मध्येदण्डप्रकाण्डं[2] स्खलनविहसिताश्चण्डदोर्दण्डशौण्डाः।
लोला लीलासु दोलाधृतिसमयमिलत्पारितोपप्रतोपाः
पूर्वाः[3] कक्षासु दूर्वाभुवि पटुत्रटवः पाटवादुत्प्लवन्ते ॥ ८९ ॥

भृङ्गालीलास्यलीलाविलुलितललितोत्फुल्लवल्लीर्मतल्लच्यां
रामारामेऽभिरामा विदधति वटवो यत्र लीलाः सशीलाः।
ताराकाराच्छहाराकुलकमठकुलोत्तंस नो कं सहर्षं
धत्ते खे लालितान्तध्वजशतशवला सात्र वश्छात्रखेला ॥ ९० ॥

सन्नद्धात्रिकशूरवीरपटलीसंरुद्धसीम्नि स्फुर-
द्वासोमण्डपमण्डलस्थितनृपे दूर्वास्थलीप्राङ्गणे।
आमृष्टाकृतयः कुतूहलकलालापा गुरूणां पुरः
स्वच्छन्दं मुहुरुच्छलन्ति वहुशो लम्बालका बालकाः ॥ ९१ ॥

श्रीराज्ञीनन्दनेन स्वजनदवहृतौ चन्दनेन प्रसङ्गी
श्रीरामः कीर्तिकामः स्वकृत उपवने निर्मितिं यस्य तेने।
को यं न स्तौति सोयं तदनु कुतुकतः पूरितो माधवेन
प्रासादः शिल्पभासा परिलसति यथा नन्दने वैजयन्तः ॥९२॥

---

१. तस्मिन्नारामे प्रतिवर्षं पाठशालाध्येतॄणां खेलन महाराजाः कारयन्ति तद्वर्णन-मितश्चतुर्भिः. २. प्रशस्तदण्डस्य मध्ये. आरोहणसमय इति भावः. ३. 'कक्षासु 'दर्जा' इति प्रसिद्धेपु पूर्वाः प्रथमे. ४. सप्तम्यन्तमारामविशेषणम्, अजहल्लिङ्गत्वान्नक्लीबता. ५. ह्विक्टोरियामहाराज्ञीज्येष्ठपुत्रेण 'प्रिंसआफ्वेलस्' इति प्र०.

श्रीमद्राममहीभुजा स्वसुहृद श्रीराजराजेश्वरी-
सूनो समतिमेत्य यो निजकृतक्रीडावने कारित ।
सोऽय माधवभूधवेन तदनु प्रोत्साहत सस्कृत
प्रासादश्रितिकान्तिभिर्विजयते द्राग्विश्वकर्मस्मयम् ॥ ९३ ॥
यस्य स्फारवसुव्ययावधि पर निर्माणमभ्रावधि
प्रोच्छ्राय पदपीठकल्पनमहो पातालसीमावधि ।
वैचित्र्य मयविस्मयावधि तथा ख्यातिर्दिगन्तावधि
श्रीमद्रामनृपप्रतिष्ठितमिद तद्वेश्म विद्योतते ॥ ९४ ॥
प्राग्विद्यते जयपुराद्दलताद्रिरुच्चै
पश्चान्नदी वहति शश्वदमानिशाहेः ।
साँगांदिनेरमपि दीव्यति दक्षिणस्या-
मम्बावतीपुरमनुत्तरमुत्तरस्याम् ॥ ९५ ॥
सत्त्वतरस्फुरदुदिलरपश्चरङ्ग-
चारुध्वजाचलमरुन्नतिवीजिताष्टम् ।
सपत्स्फुर जयपुर पुराशिरपविद्ध-
निस्तन्द्रहृत्कुलुकितच्छवि शश्वदास्ताम् ॥ ९६ ॥
श्रीमत्कुन्दननन्दनवैद्यश्रीकृष्णरामकविरचिते ।
जयपुरविलासकाव्ये सपूर्णोऽय द्वितीय उल्लास ॥ २ ॥

---

## तृतीय उल्लासः ।

कुशस्य वशे वरवीरवन्द्ये बभूव रामो जयसिंहसूनु ।
एतत्पुर येन यथार्थनीत्या रामेण साकेतमिवोदरक्षि ॥ १ ॥
श्लोका कृतास्तस्य मया पुरा ये परस्परानन्वयिनोऽन्नदातु ।
विभज्य तानत्र लिखामि सर्वान्पिष्ट हि विद्वान्न पुन पिनष्टि ॥ २ ॥
ऐश्वर्यमिन्द्राज्ज्वलनात्प्रताप कान्ति मनोजाद्धरमाञ्जनेयात् ।
गाम्भीर्यमब्धे रचितो गृहीत्वा श्रीरामभूमीनिभुरेप धात्रा ॥ ३ ॥

---

१ गर्वम २ 'इस्टर्टेहाल' इति प्रसिद्धम ३ 'सागोनर' इति प्र०

दारिद्र्यदावानलदह्यमानविद्वन्मनःकाननसेचनाय ।
दानाम्बुसान्द्रो विहितो विधात्रा श्रीरामभूमीविभुवारिवाहः ॥ ४ ॥
श्रीरामभूमीपतिदानशैलीं निशम्य यातः किमु कल्पवृक्षः ।
नो चेदयं भूवलये जनानां दृग्गोचरत्वं वद किं न याति ॥ ५ ॥
रामाद्धनं प्राप्य यतां कवीनां मार्गे पुनर्ये मिलिताः कवीन्द्राः ।
अदायि तेभ्योऽपि धनं तथा तैर्यथा प्रसन्नाः स्वगृहं प्रयाताः ॥ ६ ॥
अत्युज्ज्वलैस्ते यशसां प्ररोहैर्जातं जगद्राम सितं समस्तम् ।
न चेत्फिरङ्गाः सितदेहरङ्गा द्वीपान्तरे ब्रूहि कथं विभान्ति ॥ ७ ॥
श्रीरामसिंहक्षितिपाल नूनं सुधाकरस्त्वद्यशसा परास्तः ।
प्रतित्रियामं समुपेत्य नो चेत्कथं करं त्वन्निलये ददाति ॥ ८ ॥
श्रीरामकीर्तेस्तुलनां सुधांशुः करोत्यतिस्वच्छतया सदा यत् ।
तत्तथ्यमेवास्ति न चेदिदं स्यात्कालुष्यमन्तर्गतमस्य विद्वन् ॥ ९ ॥
द्विषच्छिरःशोणितशोणभासं धुन्वन्करेणाततिरामासिं ह ।
धत्ते भवान्कल्पकरालकालीपतिप्रभावं युधि रामसिंह ॥ १० ॥
परिस्फुरत्सभ्यसदृक्षभूतिः सुहृत्कुमुच्छ्रेणिमुदः प्रसूतिः ।
प्रभूतसौन्दर्यकलाप्रपूर्ती रामप्रभोश्चान्द्रमसीव मूर्तिः ॥ ११ ॥
अनन्तरत्नाकलितं शरण्यं गम्भीरतामात्मनि धारयन्तम् ।
मर्यादया युक्तमुदाहरामि श्रीरामभूमीधवमब्धिकल्पम् ॥ १२ ॥
सपत्नकालः करुणाविशालः कवीन्द्रपालः पृथुकीर्तिजालः ।
विस्तीर्णभालः समरे करालः प्रकाशते राम उदारमालः ॥ १३ ॥
तेने सितं विश्वममुष्य कीर्तिर्द्वेषेण हित्वा द्विषतां कुकीर्तिम् ।
सा श्वैत्यमाप्तुं विधुमाश्रितापि विद्योततेऽद्यापि कलङ्ककूटात् ॥ १४ ॥
सङ्ग्राममागच्छति रामसिंहे प्रत्यर्थिसार्थः स्वयमेति नाशम् ॥
त्वमेव तावद्वद किं नभःस्थे भात्यन्धकारो दिननाथबिम्बे ॥ १५ ॥

१. गच्छताम्. २. सभ्या एव सन्ति ऋक्षाणि तेषु भूतिर्यस्य. ३. समस्येयम्.

श्रीरामयात्रासु तुरङ्गटापक्षुण्णाद्रिधूलीपटलैर्दिवापि ।
पुनर्निशा सा भवितेति शोकात्सूर्योदये रोदिति चक्रवाकी ॥ १६ ॥
सुहृन्मनोऽब्जानि विकाशयत्यल सुख नृणा व्यातनुते स्तुत परम् ।
यस्य प्रकाशो जगदन्तरे महान्द्विपत्तमो हन्ति स रामभास्कर ॥१७
कोपप्रवेशस्फुरिताधरोद्धुरे श्रीरामभूपे क्षिपति क्षुरान्रणे ।
सपत्नहृद्द्वहरकोणनिन्हुत बभूव सभूय भय भयादिव ॥ १८ ॥

पश्याधुनाऽम्बरतले समुदेति चन्द्र-
श्चन्द्रो न चन्द्रमुखि तर्हि कवे क एप ।
श्रीरामकीर्तिललनापदपद्मकिट्ट-
प्रक्षालनार्थमुपलो घटितो विधात्रा ॥ १९ ॥

श्रीरामसिंहनृपतेस्तुलयन्ति कीर्ति
चन्द्रेण किं च सुधया कमलास्मितेन ।
मूढा हि ते जर्नयितापि यतो ययैपा-
मुल्लङ्घित प्रथितया सकलासु दिक्षु ॥ २० ॥

श्री प्राप वीररसिका चलता विहाय
घ्नन्त भवन्तमवलोक्य रणे सपत्नान् ।
मन्ये जगाम नृपराम यश सिताभ
भीत नपुसकतया त्रिजगत्सु सद्य ॥ २१ ॥

सौम्योऽपि सोमवदरिव्रजदाहकोऽसि
कर्णान्तिकेलिनयनोऽपि दिगन्तदर्शी ।
आजानुबाहुरपि हसि रिपून्विदूरा-
दाभाति राम भवदीहितमत्र चित्रम् ॥ २२ ॥

प्रत्यर्थिभूमिपतिभि कृतघोरयुद्ध
पात्रप्रदानकुशल कुशयशशुद्धम् ।
क श्लाघितु पटुरनर्घगुणै समृद्ध
श्रीमन्नरेन्द्रमिह राम इति प्रमिद्धम् ॥ २३ ॥

---

१ इयमपि समस्या २ शरविशेषान् ३ मत्म् ४ समुद्र ५ सबोधनम्.

विष्णोरुरः स्वभवनं परिहाय पद्मा
श्रीरामसिंहनृपतेः श्रयते [1]शयाब्जम् ।
आभाति कौस्तुभमिषादत एव तत्र
शून्यत्वदोषभवम[2]र्कटशुक्लजालम् ॥ २४ ॥

[3]कीर्तिं भुवि भ्रमयति स्वकृतैश्चरित्रै-
र्भ्रान्तिं न कुत्रचिदपि स्फुटमादधाति ।
राजन्भवानिव न किं भवदीयवैरी
भ्रंशं परं तु कथयामि विमृश्य तत्र ॥ २५ ॥

[4]अकाममम्बा युधि यत्पुरःसरा वामासमेतोऽखिलदुःखवारकः ।
श्रीरामसिंह त्वमिवाहितोऽपि ते पश्यामि वन्धं स्फुटमत्र केवलम् ॥ २६ ॥

[5]न क्वापि भीतोऽङ्कितमल्लशाली भां चारयन्दत्तमरः सुहृत्सु ।
यथा भवान्नाम तथैव तेऽरिः परं भणामो वयमत्र भङ्गम् ॥ २७ ॥

वस्त्रादियुक् [6]प्राप्यसुखोग्रभूमिगामी भिया नाश्रित आजिमध्ये ।
यथा भवान्भाति तथैव तेऽरिः परं तु तत्रास्त्यपरः प्रकारः ॥ २८ ॥

[7]पर्णोपमं पश्यति शत्रुमाजौ पापातिभीतोऽखिलसाधुपालः ।
यथा भवान्नाम तथैव तेऽरिः पङ्कं पुनस्तत्र विलोकयामः ॥ २९ ॥

[8]पर्णाभान्द्विपतो मृधे विमृशति स्फूर्जत्पटूक्तिः सदा
दोषौघान्सुहृदां विलोपयति यः पापातिभीतान्तरः ।
शश्वद्बद्धपरो विराजितपटः सत्संघपालः स्फुटं
तुल्यः स्याद्भवता विभो भवदरिः पङ्कं पठामः परम् ॥ ३० ॥

---

१. पाणिपद्मम्. २. लूतातन्तुजालम. ३. इतः परं दशभिश्च्युतदत्ताक्षरजातिः. भ्रंश नाशं, भ्रकारं शकारं कथयामि, भ्रमयति शमयति भ्रान्ति शान्तिम्. एवमग्रेऽपि. ४. शत्रुपक्षे, अन्धा, धामासमेतः, अखिलदुःखधारकः. ५. शत्रुपक्षे गीतः, अङ्कितगल्लशाली गाम्, दत्तगरः. ६. अन्यः, अपगतरकारश्च. तथाच 'वस्तादियुक्पाप्यसु· खोऽगभूमिगामी भिया नाशित आजिमध्ये' इति ज्ञेयम्. वस्तश्छगलकः. ७. कर्णोपम काकातिभीतोऽखिलसाधुकाल.. ८. शत्रुपक्षे कर्णाभान्; कटूक्तिः, विलोकयति; काकातिभीतान्तरः, करः, कटः, कालः, इति.

दाराश्लिष्टतनुर्दयाकुलमना पाखण्डिनामर्दको
दिक्षु ख्याततरो विदूषणगणैस्त्यक्त सदा रासद ।
दूतान्पश्यति योऽनिश करलसत्कुन्दोऽतिदक्ष प्रभो
श्रीराम त्वमिव स्मृतस्तव रिपुर्दम्भ वय ब्रूमहे ॥ ३१ ॥

उच्चै. साधुमतोदयोऽखिलगतिष्वग्रेसर सस्पृह-
स्तर्यां बान्धवतारको बुधतम प्रोद्दामतोपाश्रय ।
भूयो यस्य गृहाङ्गणेषु तनुजप्राकट्यमाशास्महे
श्रीमद्राम भवत्समो भवदरिस्तोद पर हानिद ॥ ३२ ॥

सैक्तो मानपरिग्रहे प्रतिदिन स्वीय महत्यन्वय
मीनाक्षो निलयेऽस्तु यस्य च रमावास कुमारस्थिति ।
आजौ यस्य पुरो नमन्ति रिपव श्रीराम वैरी तव
त्वत्तुल्य कुरुते पर त्विह भावान्मन्द हि वर्ण स्फुटम् ॥ ३३॥

र्व्यक्त भाति नरेषु काङ्क्षति रण सक्त सता रञ्जने
नित्य योऽध्वरकर्मकृद्वनितया रन्तु वने सज्जते ।
विख्यातो भुवि रीतिकोविद इति श्रीरामसिह प्रभो
त्वद्वत्तेऽरिगणोऽपि किं त्वधमता ब्रूतेऽत्र रोग स्फुटम् ॥ ३४ ॥

सामोद समरेषु सत्कृतकविग्रामो निकामोज्ज्वल
कामो मानसमोटने मृगदृशा रामोरुधामोदय ।
विश्रामो विदुषा समीपविलसद्रामोऽभिगमो गुणै-
रारामोपम एष तापहरणे रामो विरामो द्विषाम् ॥ ३५ ॥

---

१ दम्भ कपट दकार भकारामति चार्थं एव च भागश्लिष्टतनुर्भयाकुल्मना, अ-भैक, भिक्षुख्याततर, विभूषणगणै, समारासम, भूतान् लसत्कुम्भोऽतिभक्ष, इति २ तोदो दु ख तकारस्य दकारश्चेत्यर्थ तथाच मदोदय, असिलगदिषु, दर्याम्, यान्धवदारक, बुधदम, प्रोद्दामदोपाश्रय, दनुजप्राकट्यम्, इति ३ मन्द वर्णे रूप मकार दकारं चेत्यर्थ तथाच दानपरिग्रहे, ददति, दीनाक्ष, ग्दावास, कुदारस्थिति नदन्ति, इति महपूजायामिति भ्वादि ४ रोगो गद, रकारस्य गकारश्च तथाच नगेषु, गणम् गञ्जने, अध्वगकर्मकृद्, गन्तुम्, गीतिकोविद, इति

आगामोदितसन्महा रतिविधौ क्षामोदरीणां प्रियः
सत्सङ्गोक्तिकथाकुतूहलकृती दामोदरे सादरः ।
व्यामोही युधि विद्विषां दिशि दिशि प्रख्यातनामोन्नति-
र्नीत्या मोदितसज्जनो विजयते रामो वदामो वयम् ॥ ३६ ॥
दोर्दण्डद्वयवीर्यखण्डितरिपुक्ष्मापालसीमन्तिनी-
नेत्रप्रस्खलदश्रुनीरनिकरप्रक्षालितोर्वीतलः ।
पारावारतटावरोपितयशःस्तम्भः कृपानीरधिः
श्रीरामो दृढसेतुबन्धनविधौ रामोयमुद्द्योतते ॥ ३७ ॥
श्रीगोविन्दपदारविन्दयुगलध्यानोद्यतं यन्मनो
यत्पाणी प्रवणौ धरादिविपदां प्रक्षालने पादयोः ।
यत्खड्गो रिपुमुण्डखण्डनविधौ प्राप्तप्रचण्डोदयः
स श्रीरामसमानभव्यविभवो रामोयमामोदते ॥ ३८ ॥
चञ्चत्तुङ्गतुरङ्गनिष्ठुरखुरक्षुण्णक्ष्मामण्डल-
प्रोड्डीनोग्ररजोभरेण निभृतब्रह्माण्डभाण्डोदरः ।
भीमो भीम इवाहवेषु सकलक्ष्मापालचूडामणिः
श्रीरामः कुरुते द्विपत्करिकुले शार्दूलविक्रीडितम् ॥ ३९ ॥
कंदर्पादपि सुन्दरो रविमहाः प्रत्यर्थिसीमन्तिनी-
वक्राम्भोजसुधाकरोऽतिविभवो युद्धेषु पार्थोपमः ।
रक्षाकृज्जगतः स्वकीर्तिविदितो रामोऽस्तु युक्तो मुदा
दानी शंकरसेवको वरगुणो नीत्युत्तमः सर्वदा॥४०॥चक्रबन्धः॥
यत्सैन्ये चलिते प्रचेलुरचला जाता स्थिराप्यस्थिरा
धूलीभिर्निचितेऽम्बरे समभवद्भास्वानभास्वानलम् ।
वैकुण्ठोऽपि विकुण्ठभावमभजत्स्थाणुत्वमीशोऽपि स
श्रीमाञ्चन्दति चन्द्रचन्द्रियशा रामाभिधानो नृपः ॥४१॥
युद्धे युद्धविदोऽर्जुनं नयविधौ धीरा गिरामीश्वरं
सौन्दर्ये सुदृशः स्मरं महसि यं तेजस्विनो भास्करम् ।

१. ब्राह्मणानाम्. २. चित्रं तु ग्रन्थसमाप्तिपृष्ठे द्रष्टव्यम्. ३. पृथ्वी.

धर्मे धर्मविदोऽपि धर्मतनय दानेऽर्थिसार्था बलिं
मन्यन्ते वसुधावसु स जयति श्रीरामनामा नृप ॥ ४२ ॥

या नैवोष्णकर कदापि ददृशुर्यासा न चैलाञ्चले
कम्प गन्धवहश्चकार न दधुर्भूमौ स्वतलपात्पदम् ।
श्रीमद्रामसपत्नवर्गवनिता धर्मेण शुष्कानना
वात्याधूतरजोमलीमसरुचो व्यग्रा भ्रमन्त्यद्रिषु ॥ ४३ ॥

यँत्त्व मारयसे प्रमत्तमहिष प्रोद्यम्य खड्ग बला-
त्सिंहस्योपरि सज्जसे निजजनक्लेशापहो गीयसे ।
चण्ड दण्डयसे शिव कलयसे तन्नाम मन्यामहे
सद्भक्ते जगदम्बया त्वयि निज माहात्म्यमारोपितम् ॥४४॥

सताप हरते सता रिपुवधूदृङ्नीरसिन्धुं बला-
दुद्वेल कुरुते दधाति मिषतामक्ष्णोरमन्दा मुदम् ।
दर्पोष्मक्षपणेन हन्त्सु तनुते शैत्य सकम्प द्विषा
लीला चान्द्रमसीं प्रतापतपन श्रीराम धत्ते तव ॥ ४५ ॥

श्रीमद्रामनरेश्वर त्वयि रणे गृह्णत्यसिं प्रोज्ज्वल
भीतप्रद्रुतसर्वशत्रुनृपतित्यक्ता स्त्रियोऽगुर्वनम् ।
पृष्टास्तत्र च भिल्लदारनिकरैरस्त्यद्भुत किं पुरे
युष्माक वदतेति ता प्रजगदु शीतस्वभाव शशी ॥ ४६ ॥

सुग्रीवाद्भुतसुन्दराकृतिरपि प्रौढाङ्गदोऽपि स्फुर-
त्सौमित्रोऽपि पुरन्दरोन्नतिरपि श्रीसेतुकर्तापि सन् ।
राम त्व खरदूषणादिकलित भूदेवविद्रावण
किं मथ्नासि न दैन्यरावणममु वैदेहिवाक्सादरम् ॥ ४७ ॥

---

१ वनमहिषं महिषासुर च मृगयार्थ सिंहस्योपरि सज्जनमन्यत्र यात्रार्थम् प्रचण्ड क्रूर चण्डासुर च २ पश्यताम् ३ एवचात्र शशिन उष्णस्वभावद्योतनेन तासां प्रियविरहो व्यज्यते ४ 'वैदेहि' इति सबोधनरूपाया वाचि सादरम् वै निश्चयेन 'देहि' इत्याकारकवाचि सादर च

श्रीसूर्यान्वयजोऽङ्गदेन सहितः सुग्रीवमन्त्रिच्छविः
सद्धर्माभिरतः पुरन्दरनुतः क्ष्मानिर्जरैः प्रार्थितः ।
दानास्त्रैः खरदूपणादिकटुकं शार्दूलविक्रीडितं
कुर्वाणं मयि दैन्यरावणममुं त्वं राम राजञ्जहि ॥ ४८ ॥

यत्पाहीत्यमुमब्रवीः सकरुणं वाचं न दुष्टोष्ठ रे
तन्नो जातमिदं निकृन्तनमिति क्रोधेन रक्तेक्षणैः ।
श्रीमद्रामकरालखड्गपतितैर्दिव्योत्तमाङ्गैर्द्विपां
दन्तैर्हन्त युधि स्वकीयमधरं संदश्य संस्थीयते ॥ ४९ ॥

चञ्चत्काञ्चनघण्टिकाझणझणत्कारं चलन्ती मुहुः
कण्ठाश्लेषविशारदा विदधती संदर्शनान्मूर्छनाम् ।
दिग्धा रक्तपटीरतो निजरुचा विद्योतयन्ती दिशः
श्रीमद्रामकृपाणिका किमु रणे नो नागकन्यायते ॥ ५० ॥

रामे रामपराक्रमे युधि पुरः प्रोत्प्लुत्य हन्तुं रिपू-
न्कोशात्कर्षति हेममण्डितमसिं ज्वालाजटालोज्ज्वलम् ।
रम्भा भावमुवाह मानममितं मेनापि मे नायका-
श्चक्रे किं च तिलोत्तमापि तिलकं घ्रातं घृताच्या घृतम् ॥ ५१ ॥

कुर्वाणे त्वयि राम ठात्कृतिनदद्वन्द्वास्त्रनिर्यज्ज्वल-
द्गोलाघातफटात्कृतिस्फुटदुरःप्रत्यर्थिविध्वंसनम् ।
क्रव्योत्कण्ठितकाककङ्ककुररक्रव्यादकोलाहलैः
कालीकालकपालिनां किलकिलात्कारः कठोरः कृतः ॥ ५२ ॥

त्वद्दत्तचस्त्रमुखोच्छलत्पृथुगुटीपातप्रदीर्णद्विप-
द्वक्षश्छिद्रसमुद्गतास्रसुरभिप्राणानिलैर्वीजिताः ।
पश्यन्त्यम्बरचत्वरेष्वनिमिषाः क्ष्माशक्र शक्रादयो
वीरव्रातशिरोमणेस्तव रणे राजद्भुजावैभवम् ॥ ५३ ॥

---

१. पुरन्दरनामास्तीह कश्चिन्महाराजकृपापात्रं कान्यकुब्जो द्विजः. २. 'बन्दूकतोफादि'. ३. द्विगुणः.

श्रीरामेण घनायित युधि शरैर्धारायित सतत
हुकारै रसितायित मणिगणैर्विद्युत्प्रकाशायितम् ।
शत्रूणा हृदि निर्झरायितमसृक्पूरेण पङ्कायित
मासै रोमभिरङ्कुरायितमहो ह्रसायित भीरुभि ॥ ९४ ॥
रामे कोपकषायिते छुरिकया छेत्तु प्रवृत्ते रिपुं-
स्तेऽपि च्छेत्तुमुपारभन्त पुरतो दन्तैस्तृणानि द्रुतम् ।
भीत्या स्वीयकर शिर सु ददति भीता कर तेऽप्यद्ध-
जित्वा स्व शरणं गते च शरण त तेऽपि जग्मुर्नता ॥ ९५ ॥
कालीक्रूरकटाक्षसततिरिव क्रोधोग्ररुद्रस्फुर-
द्दक्भ्रूरिव शेषमूर्तिरिव च प्रेतेन्द्रदंष्ट्रेव च ।
सवर्ताग्निशिखेव तीव्रतपनप्रौढप्रभेवाम्बर-
भ्रष्टोल्केव विलोक्यते रिपुभटै. श्रीराम शक्तिस्तव ॥ ९६ ॥
सङ्ग्रामे भवता जितेषु रिपुषु क्ष्माचक्रशक्र प्रभो
वल्गाद्भिस्तव सैनिकैरपि जिता सर्वेपि तत्सैनिका ।
ब्रूमोऽन्यत्किमपि त्वदीययशसा पूर्णेन्दुसस्पर्धिना
तत्काल किल तद्यशोऽपि विजित मालिन्यमाप ह्रिया ॥ ९७ ॥
चीत्कारै करिणा तुरङ्गमरवैराग्नेययन्त्रस्वनै-
र्भेरीभाङ्कृतिभिर्मृदङ्गरसितैर्वरगड्ढक्वेडितै ।
हुकारे युधि रामसिंह भवता काष्ठा परा प्रापिते
प्रापुर्मोहमरिव्रजा वधिरिता वार्ता प्रहारस्य का ॥ ९८ ॥
कोपावेशभयकरभ्रुकुटिना सिंहध्वनि कुर्वता
श्रीरामेण रणाङ्गणेऽरिपु शरै सप्रापितेषु क्षयम् ।
वक्षो वैरिमृगीदृशा यदसुभिर्भित्त्वा बहिर्नो गत
हेतु तत्र वितर्कये कठिनता वक्षोरुहद्वन्द्वयो ॥ ९९ ॥
- त्वा युद्धोद्यतमाकर्ण्य नगरीं हित्वा गृहीत्वा स्त्रियो
धावन्त समगेनयन्त विजनेऽरण्ये स्थिर्ति विद्विप ।

---

१ शरण गृहरक्षित्री .

राजँस्तत्र कठोरसूर्यकिरणैस्तप्ताः पिपासाकुलाः
शोकाश्रूणि पिबन्ति शत्रुसुदृशामङ्केशयाः सूनवः ॥ ६० ॥
एकोऽहं सकलानपि प्रतिभटान्हन्तास्मि सत्यं शरै-
रित्थं राम महाहवे कृतवति प्रौढप्रतिज्ञां त्वयि ।
अव्यायामवहूभवत्परिलुलन्मेदोभरैर्भारवा-
न्दस्राभ्यामुपचर्यते प्रतिदिनं मृत्युर्भयां मन्यते ॥ ६१ ॥
श्रीमद्राममहीन्द्र वीरमुकुट त्वज्जैत्रयात्रोत्सवे
वल्गत्तुङ्गतुरङ्गटापपटलीक्षुण्णक्षमाधूलिभिः ।
अस्थानेऽपि मुहुः परस्परमिमाः मंभूय संरम्भतो
दिक्कान्ताः केलयन्ति फाल्गुनमहक्रीडाकलाकौशलम् ॥ ६२ ॥
श्रीमद्राम वदामि सत्यमधुना नाट्येक्षणच्छद्मना
तत्त्वं संप्रति सर्ववित्सु कविषु त्वं किं वृथा निह्नुषे ।
त्वां नक्रध्वजसुन्दरं रिपुकुले वक्रस्वभावं विभो
शक्रः स्फारमुदे सदेवगणिकाचक्रः स्वयं सेवते ॥ ६३ ॥
श्रीमद्राममहीन्द्र केपि कवयः सिद्धान्तमुग्धाशया
निःशङ्कं प्रलपन्तु मे पुनरयं तर्कः समुन्मीलति ।
त्वामाराधयितुं तदागतमिदं शक्राप्सरोधिष्ठितं
साक्षादद्भुतवैजयन्तभवनं नाट्यालयच्छद्मना ॥ ६४ ॥
श्रीमद्रामे वसुसफलिताशेषसामन्तकामे
यात्रोद्योगं कृतवति महासाहसे दिग्जयाय ।
आशापालाः शिखिलमनसः सर्वतः स्विन्नभाला
जाताशङ्का निभृतनिभृतं मन्त्रिभिर्मन्त्रयन्ति ॥ ६५ ॥
श्रीराम प्रौढकाम त्वदसिविलुलिता जीवितं रक्षयन्तः
स्थाने स्थाने भ्रमन्तः स्वकृतमघचयं सर्वदा संस्मरन्तः ।
विक्रीय स्वप्रियाभिर्मृणतृणगणैर्गुम्फिताञ्शूर्पसङ्घाँ-
ल्लब्धाभिः पोलिकाभिः प्रतिदिनमरयः कुक्षिमापूरयन्ति ॥ ६६ ॥

१. इतीति शेषः. २. कुर्वन्ति.

मूर्छामालोक्य शत्रौ रणभुवि भवता तोमरैस्ताडितस्य
क्षिप्रं शक्रः प्रमोदादतिथिरिति करे राम पाद्यं करोति ।
हर्षं प्राप्नोति काली कवल इति धिया सृक्किणी लेलिहाना
धार्यन्ते चाप्सरोभिर्दयित इति मुदा मुग्धमुक्ताविभूषा ॥ ६७ ॥
साश्चर्यं वीक्षितस्योपरि सुरपतिना मत्तवक्त्रक्तधारा-
पूरोन्मज्जद्गटाया रणभुवि भवतः खड्गपातैर्निशम्य ।
त्रुट्यद्ग्रीवान्स्वकान्तान्पथिकजनमुखान्मौक्तिकाभाश्रुबिन्दू-
न्राम त्वद्वैरिनार्यः कुचकलशयुगेनान्वहं संवहन्ति ॥ ६८ ॥
राम त्वद्दानकीर्त्या श्रुतिपथगतया गञ्जिताशेषमाना
मन्ये सा कामधेनुस्तृणकवलनतः स्वं पशुत्वं व्यनक्ति ।
क्षीणः सन्कि च चिन्तामणिरपि लभते तीव्रचिन्तास्पदत्वं
सोप्युच्चैः कल्पवृक्षः पवनहतिमिषान्निह्नुते कम्पनानि ॥ ६९ ॥
स्वयं दृष्ट्वाऽशेषं त्रिभुवनमिदं राम नृपते
भवद्दानोत्पन्नैरनवधियशोभिर्धवलितम् ।
जडीभूतश्चिन्तामणिरपि स चिन्ताकुलतया
प्रकम्पं देवद्रुः प्रकटयति वाताहतिमिषात् ॥ ७० ॥
परां प्रीतिं धत्ते मनसि मधुरैः षट्पदरवै-
र्महामोदः पङ्क्त्या वरसुमनसा सेविततरः ।
श्रिया जुष्टः स्फूर्जद्दिनकरमहाः कामजनकः
क्षितौ राम व्यक्तं विलसति भवान्माधव इव ॥ ७१ ॥
प्रतापाग्निज्वालाज्वलितरिपुकान्तारनिकरो
वरारोहाचक्षुर्विहगवरविश्रामविटपी ।
अनीतिध्वान्तौघप्रलयविधिमध्यान्हमिहिरो
दरिद्राशापूर्तौ घनजलधरो रामनृपतिः ॥ ७२ ॥
जगत्कान्तारान्तर्लसदमृतकुण्डो बलधुनी-
प्रवाहप्रध्वस्तप्रबलनिमतानोर्वरकुलः[1] ।

---
१ विपुलमन्तक

नृपाधीशश्रेणीस्तुतचरणपङ्केरुहयुगः
कुलाकाशादित्यो भुवि विजयते रामनृपतिः ॥ ७३ ॥

अहो श्रीमद्रामे वलदमनवीर्ये नरपतौ
कृतात्यन्तक्रोधे करकलितखड्गे रणमुखम् ।
समायाते प्राणानहितनिवहः संत्यजति हि
ज्वलन्तं दृष्ट्वा कः प्रलयदहनं जीवति जनः ॥ ७४ ॥

अभीष्टफलपूरकं द्विजगणैः समाराधितं
सुगन्धसुभगं स्फुरत्कुसुमशेखरैः शोभितम् ।
सदालिविहितस्तवं सुदृढमूलमत्युन्नतं
सुरद्रुमिव वर्णये जगति रामसिंहं नृपम् ॥ ७५ ॥

प्रकामगुण राम भोस्तव यशोभिरत्युज्ज्वलै-
स्तृणीकृतमिदं वलादहह मण्डलं शीतगोः ।
अथ त्वमिति मे वचो मनसि चेन्मृपा मन्यसे
कथं वद सुधानिधाविह मृगो दरीदृश्यते ॥ ७६ ॥

विचेरुरटवीतले कति कति प्रतेरुर्नदी-
र्भयेन मुमुहुः परे गिरिपु चक्रुरेके स्थितिम् ।
पुराणि कतिचिज्जहुर्मरणमापुरन्ये विपा-
न्निशम्य रिपुभूमिपा जगति रामयात्रोद्यमम् ॥ ७७ ॥

निशम्य नृप राम भो मधुरतां त्वदीयाकृतेः
कपालिनि सदा शिवाप्यशिवमेव हा काङ्क्षति ।
स्वचेतसि शची विचारयति कौशिकं कौशिकं
पुराणपुरुपारातिः श्रयति सा भवन्तं रमा ॥ ७८ ॥

क्व गच्छसि सखेऽधुना कथय यामि हेमाचलं
किमर्थमृणपूर्तये वहु धनं स मे दास्यति ।
अरे जयपुरे न किं व्रजसि तत्र दातास्ति को
न किं श्रुतिपथं गतस्तव स रामसिंहो विभुः ॥ ७९ ॥

१. इन्द्रपराक्रमे. २. इन्द्रम्. ३. धूकम्. ४. वाकोवाक्यमिदम्.

अटन्ति धनहेतवे जगति केऽपि मन्त्र परे
जपन्ति जयसिद्धये दधति केऽपि कीर्त्यै गिरम् ।
वय किमपि लिप्सव शृणुत रामसिंहाह्वय
वदान्यकुलशेखर सततमेकमेव स्तुम ॥ ८० ॥

शशिविशदयश परम्पराभिर्जगदखिल भृशमुज्ज्वल प्रकुर्वन् ।
स्फुरति रिपुकरीन्द्रनाशसिंहो वितरणसद्व्रतिरेप रामसिंह ॥ ८१ ॥

सुकृतविटपिपोषणे तडित्वान्स्वजनहृदम्बुजबोधने विवस्वान् ।
जगति विजयते स रामपृथ्वीपतिरुपकारकर कवीश्वराणाम् ॥ ८२ ॥

अविकशौर्यमहीधरकुञ्जर कुलगभीरसरोवरपङ्कजम् ।
नयलतातितितोयदनायको जयति राम इति प्रथितो नृप ॥ ८३ ॥

वैरिवधूजनलोचनकज्जलवसुतस्करोप्युच्चै ।
कोशे तिष्ठति चित्र खङ्ग श्रीरामसिंहस्य ॥ ८४ ॥

रिपुकुम्भिकुम्भपाटनविधिपरिपाटीप्रचण्डपाण्डित्य ।
दुर्गाधिष्ठितपृष्ठ कलयतु कुशलानि रामसिंहोऽयम् ॥ ८५ ॥

विधुरिव मृदुकरमोदितभुवन श्रीरामसिंहोऽयम् ।
असिरिव कोशत्यागप्रख्यापितनिक्रमो जयति ॥ ८६ ॥

त्वा दृष्ट्वैव रणे किंचिद्विकटभ्रुकुटिं रिपु ।
श्रीराम विजहौ प्राणान्क काल वीक्ष्य जीवति ॥ ८७ ॥

दूरादुत्तारितोष्णीपै राज्ञा राममहीपते ।
दधु गिरोभिस्ताम्रास्या देवा पौरन्दरीमिव ॥ ८८ ॥

किमत्र बहुनोक्तेन सुधाशुशतसुन्दरै ।
श्रीरामस्य यशोयूथैर्ब्रह्माण्ड धवलीकृतम् ॥ ८९ ॥

रामसिंह भुवि तावके राजति यशसि चिरेण ।
सुधास्रावमिपत शशी स्विद्यति भीतिभरेण ॥ ९० ॥

---

१ कविनाम्, 'कीर्तिरक्षरसवद्धा स्थिरा भवति भूतले' इत्युक्ते २ तस्करस्यापि कोशाधिकरणत्वमिति चित्रम् ३ अङ्गरेजा । ४ दोहाच्छन्द

सुधासिन्धुलहरीलसच्छविभवदीययशांसि ।
वीक्ष्य शुचा क्षयमाप किं शशी जितात्ममहांसि ॥ ९१ ॥
सूत प्रेरय हा पितश्चल वृथा भ्रातर्भयं मा कृथा
भिन्धि च्छिन्धि हतोऽसि तिष्ठ समरे युध्यस्व कुन्तान्क्षिप ।
इत्थं भूरिविलापमेदुरगिरः श्रीरामसिंह स्फुटं
श्रूयन्ते शबरैर्धराधरदरीनिद्राजुषां त्वद्द्विषाम् ॥ ९२ ॥
सूत रथमेहि देहि बाणगणमाशु मे हि मित्र धृतिमत्र धेहि सङ्गरमहामहे
वर्म कुत्र चर्म कुत्र भयं वृथा किनु कथाश्छिन्धिभिन्धि धाव धाव सहे नास्य नामहे
इति स्फुटं भवद्द्विषां शैलगुहास्वापजुषां विलापयुग्वचो वयं समुपलभामहे
वैरिकुलवृन्दकाल चन्द्रसितकीर्तिजाल कण्ठलोलरत्नमाल महीपाल राम हे ९३
श्रीमत्कुन्दननन्दनवैद्यश्रीकृष्णरामकविरचिते ।
जयपुरविलासकाव्ये संपूर्णोऽयं तृतीय उल्लासः ॥ ३ ॥

---

## चतुर्थ उल्लासः ।

श्रीमाधवो रामनृपादनन्तरं तदास्पदे चञ्चति चारुयौवनः ।
यः सांप्रतं नाम निजं कृतार्थयन्परान्परं तापयाति प्रतापतः ॥ १ ॥
अद्य श्वो वा कविषु निपतिष्यन्ति संपत्कटाक्षा
धर्मप्रत्यर्थिषु च निबिडाः शश्वदापत्कटाक्षाः ।
ज्ञातारं त्वां नृप जयपुरीराज्यसिंहासनस्थं
दृष्ट्वा चित्ते मुहुरिति मतिर्जायते मादृशानाम् ॥ २ ॥
श्रीमत्कोदण्डदण्डप्रबलघनबले न्यक्कृतार्कप्रतापे
स्फूर्जद्गम्भीरनादे रयरुचिरमहावाहिनीव्यक्तशक्तौ ।
धारासंपातसारे बहुजनितजगज्जीवने माधवेन्द्रे
वर्षालक्ष्मीं दधाने दवथुविधुरितः को न धत्ते प्रमोदम् ॥ ३ ॥
श्रीमद्गोपालपादाम्बुजयुगशरणस्तत्कृपापूर्णकाम-
श्चन्द्रप्रख्यैर्यशोभिर्धवलितसकलक्ष्मातलो नीतिवेत्ता ।

---

१. घनाक्षर नाम वृत्तं कवित्वापरपर्याय वाणीभूषणे. २. सेना नद्यश्च. ३. खड्ग-धारा च. ४. दाहदुःखितः.

लज्जीकुर्वन्मदानैस्त्रिदशविटपिन स्त्रग्धराकीर्तनीयो
धर्मज्ञो माधवेन्द्रो दलयतु बलतो वल्गतो वैरिवीरान् ॥ ४ ॥
सङ्ग्रामामन्दमाद्यद्विमतमदगिरिध्नसदम्भोलिकेलि-
र्लोलल्लालित्यलीलालहरिविलुलितोल्लासिकदर्पदर्प[2] ।
तेज प्राग्भारखर्वीकृततपनकरश्रेणिरुर्वीविभागे
भाति श्रीमाधवाब्धिस्मृतिरतिरुचिरो माधवक्ष्माधवेन्द्र ॥ ५ ॥
भागारोपितवान्यशोव्रततिका मह्यालवाले बलि
कर्णेन प्रतिपालिता पुनरहो जाता द्विपत्रोद्गमा ।
अम्लाना चिरकालतस्तदनु ता श्रीमाधवाम्भोधर
सिञ्चन्स्फारसुवर्णदानसलिलैरुल्लासयत्यन्वहम् ॥ ६ ॥
येन प्रेमहिमै प्रजासु रचिता तप्तासु शीतच्छटा
किं चारातियश सर सु जनितस्तेजोभिरुष्णागम ।
धाराभिर्द्रविणस्य येन विहिता विद्वत्सु वर्षा मुहु
सोऽय नन्दति माधवोऽत्र युगपत्काल त्रिधा कल्पयन् ॥ ७ ॥
दृप्यद्वैरिसमुच्चयक्षयकर कीर्तिद्युतिद्योतिता-
शेषाकाशदिगन्तर पटुतर प्राज्ञौघविस्तार्पणे ।
भूपव्रातकिरीटरत्ननिकरैर्नीराजिताङ्घ्रिद्वयो
वीर सम्प्रति माधवेन्द्रधरणीपाल पर राजते ॥ ८ ॥
कदर्पो रमणीमन सु सुमणिर्भूभृद्गणग्रामणी-
र्गर्वग्रस्तसमस्तशूरसरणिप्रोद्दामचूडामणि ।
मध्याह्नद्युमणिद्युतिर्वितरणैर्विध्वस्तचिन्तामणि
श्रीमान्सम्प्रति माधवेन्द्रधरणीपालो रणे राजताम् ॥ ९ ॥
सोल्लास कविताविचारगहनोऽलङ्कारकान्ताकाति-
र्नानाद्दुर्गमशक्तिलक्षणलसद्व्यक्तिर्गभीरध्वनि ।

---

१ उल्लासो हर्ष परिच्छेदश्च २ शक्तिलक्षणाव्यञ्जनाख्यास्तिस्रो वृत्तय नाना दुर्गमाश्च शक्तय प्रभावोत्साहमन्त्रजन्या यस्य स , लक्षणर्लसन्ती व्यक्तिमूर्तिर्यस्य स च

माधुर्यादिगुणः स्तुतः कविकुलैः साहित्यविद्यावधि-
श्श्वत्प्रौढरसो विराजसि विभो काव्यप्रकाशोपमः ॥ १० ॥
तारापङ्क्तिषु चाकचक्यंमहसां स्वर्गे सुधानां विधौ
ज्योत्स्नानां पुरजित्कपर्दकुहरे भागीरथीरोचिषाम् ।
दुग्धाब्धौ लहरीचमत्कृतिरुचां पर्युच्छलन्ति च्छला-
दच्छाच्छा गुणगुच्छ कच्छनृप भोस्त्वत्कीर्तिपुञ्जच्छटाः ॥ ११ ॥
यत्त्वं पूरयसे धनैः कवयतां कामं प्रकामं प्रभो
शत्रून्धूनयसे प्रसह्य निजदोर्जन्येन जन्येन यत् ।
रक्षान्योजयसे प्रजासु विलसद्विज्ञान विज्ञानलं
तस्मात्कूर्मनृपाल पालय महागाम्भीर्य गां भीर्यतः ॥ १२ ॥
धर्मः शर्म यदाप मर्मविधिना कर्म प्रवृत्तं श्रुते-
र्यद्दम्भोऽपसृतः स्रवन्ति रभसादम्भो यदम्भोभृतः ।
भूयानेषु वली कृतीयति कलिः स्थानेऽद्य जाने यशो-
युञ्जाने त्वयि वीर माधवमहीजाने प्रजानेतरि ॥ १३ ॥
को दाता भुवि माधवः सुतनुभिः कः प्रार्थ्यते माधवः
को वीरो युधि माधवः कविकुलैः कः स्तूयते माधवः ।
कः श्रीमानति माधवः समधिकं को वा सुखी माधवः
कः शत्रून्स्यति माधवः सुयशसा कः शोभते माधवः ॥ १४ ॥
आस्तीर्णाद्भुतसंस्तरे समधिकव्यालम्बिमुक्तासर-
स्वर्णस्तम्भलसद्वितानरुचिरे श्रीसर्वतोमन्दिरे ।
चित्रप्रच्छदतूलतुन्दिलतरस्फीतासनाधिष्ठितो .
भूपव्रातनमस्कृतो विजयते श्रीमाधवक्ष्माधवः ॥ १५ ॥
सौभाग्यं रिपुयोषितां विगलितं विद्वद्विपत्प्रोषिता
मोदो मेदुरतामियाय सुहृदां धर्मेण धैर्यं धृतम् ।

---

१. माधुर्योज.प्रसादाख्या', पक्षे सौन्दर्यादयश्च गुणा यस्य. २. श्रृङ्गारादी रसः. ३. युद्धेन. ४. रक्षाणां विशेषणम्. ५. सत्ययुगमिवाचरति. ६. 'सर्वता' इति प्रसिद्धे राजसौधविशेषे.

चिन्तारत्नसुरद्रुमप्रभृतिभिर्लीन क्वचिल्लज्जया
त्वामाकर्ण्य महीपते जयपुरीराज्यासने संस्थितम् ॥ १६ ॥

संद्वृन्दावनलालसो धृतमहानन्दादर सोद्धवो
युद्धादौ प्रकटीकृतार्जुनयशा सत्यानुरक्ताशय ।
अक्रूरोक्तिरतोऽनिरुद्धविभवो वल्गद्बलप्रोन्नति
श्रीमानेष विभाति माधव इव श्रीमाधव क्ष्माधव. ॥ १७ ॥

विष्वक्सेनतया जगत्सु विदितो देवव्रते सादरो
धर्मद्वेषिवधैकतानहृदय प्रोद्दामरामप्रिय ।
ब्रह्मण्यो विजयप्रसङ्गरसिक शश्वद्विवाहोचितो
धत्ते सम्प्रति माधवश्रियमसौ श्रीमाधव क्ष्माधव ॥ १८ ॥

यस्त्व प्रौढबलोदयेन कुरुषे नो कंसहर्ष सदा
विष्वक्सेनतया प्रसिद्धिमयसे देवव्रते स्निह्यसि ।
प्रीतिं यास्यनिरुद्धवीर्ययशसा तन्माधव ब्रूमहे
सद्भक्ते त्वयि माधवेन निखिल माहात्म्यमारोपितम् ॥ १९ ॥

रामाज्ञामनुवर्तसे वितनुषे श्रीशूरसेनादर
ब्रह्मद्वेषिवधाय विक्रममपि व्यक्त समालम्बसे ।
किं च द्वारवती महाजयपुरीमाक्रम्य यद्राजसे
तस्मान्माधव समत कवयता सर्वात्मना माधव ॥ २० ॥

---

१ सतां वृन्दस्यावने लालसा यस्य स च, पक्षेऽर्थ प्रसिद्ध २ धृतो महत्यानन्दे आदरो येन स च महति नन्दे च ३ उत्सवेन उद्धवेन च सहित ४ अर्जुनस्य अर्जुन च यशो येन ५ सत्ये सत्यभामायां च ६ न क्रूरोक्तिषु च ७ न निरुद्धो विभवो यस्य स च ८ पट सैन्य रामश्च ९ सतत सैन्यतया नाम्नेन च १० देवविषयके व्रते भीष्मे च ११ जय अर्जुनश्च १२ विवाह उद्वाहो गरुडश्च १३ समक्रमेणोऽन्य १४ रामस्य दशरथेः रामस्य परशुरामस्य च १५ श्रीशूरसेन वसुदेवपिता तस्य शूरसेनदेशस्य १६ महाजयस्य पुरीमिति द्वारवती जित्वा द्वारवतीमिति च महाजयपुरी , सवाइजयपुरस्येत्यर्थ

नो कुब्जां बहु मन्यसे न चपला कापि त्वदन्तःपुरे
नो गोपालसखोऽसि नापि तनुपे बीभत्सुना संगतिम् ।
नो वा हंसि वृषं कदाचिदपि नो स्वं मातुलं निन्दसि
श्रीमद्भूप तथापि माधव इति ख्यातोऽसि चित्रं महत् ॥ २१ ॥

[4]देवैः कृतस्तुतिरुपासितसत्कदम्बः
शृङ्गारमूर्तिरघनाशनवृत्तिरेपः ।
उत्खातरोपितमहीभृदुदग्रवीर्यः
श्रीमाधवो जगति राजति माधवश्रीः ॥ २२ ॥

श्रीरामसूनुः सुरभिप्रचारो बाल्येऽप्यलं पूतनयाविरुद्धः ।
रामाविहारी रसरासरङ्गः श्रीमाधवो माधववद्विभाति ॥ २३ ॥

सततयशोदानमनोमुदितः संफुल्लपुण्डरीकाक्षः ।
नितरामगाधबोधो माधव इव माधवो नृपतिः ॥ २४ ॥

कृतवैरिबाणभङ्गं प्रकटितविजयप्रसङ्गपुरुरङ्गम् ।
श्रीमाधवमिव माधवमनङ्गवन्द्यस्वरूपमवलम्बे ॥ २५ ॥

दधतं पुष्पापीडं निपीडयन्तं च कुवलयापीडम् ।
वीक्ष्य विचित्रक्रीडं माधवमिह को न माधवं स्मरति ॥ २६ ॥

अगणितमणिरेकमणिं बहूद्धवो दधतमेकमुद्धवकम् ।
बलवृन्दयुगेकबलं श्रीमाधव एष माधवं हसति ॥ २७ ॥

गलललितहीरहारो वीरविहारो विरोधिसंहारः ।
भुजबलविजितकुमारो [11]रामकुमारो विभाति जितमारः ॥ २८ ॥

वचनं क्षमे क्षमस्व त्वत्तो माधवविभोः क्षमा महती ।
यां तव विडम्बयन्त्याः सहसा सर्वत्र धूलिरुड्डीना ॥ २९ ॥

सद्गुणरत्नाकरतां भवतामाकर्ण्य कीर्तितां कीर्त्या ।
रत्नाकरः स जाने क्षितिजाने वेपते मिषाद्वीचेः ॥ ३० ॥

---

१. चञ्चला लक्ष्मीश्च. २. अर्जुनेन दुर्गतेन च. ३. वृषासुरं धर्मं च. ४. राजभिः सुरैश्च. ५. सत्समूहः सन्नीपश्च. ६. पापनाशनेऽघासुरमारणे च. ७. गोवर्धनो राजानश्च. ८. सूनुः पुत्रोऽनुजश्च. ९. गोप्रचारः शोभनप्रचारश्च. १०. व्यतिरेकोऽत्रालंकारः. ११. श्रीरामसिंहपुत्रः.

क्ष्माधव माधव भवतो विपक्षमहिषी प्रतापपरितप्ता ।
मृगमदकुङ्कुमपङ्के प्रियपर्यङ्के विलोठन स्मरति ॥ ३१ ॥
आर्याकलितप्रकृतिर्मणिगणनिकरप्रसन्नवक्त्रश्री ।
युक्त प्रतिष्ठया त्व श्रीमाधव वृत्तशास्त्रविभवोऽसि ॥ ३२ ॥
विजितारिपुर कनकोत्तसश्री सर्वमङ्गलोल्लासी ।
क्ष्माधव माधव भवता किमु माधवता न धारिता जगति ॥ ३३ ॥
द्विजराजराजमानो विजयासङ्गी विभूतिभिर्भव्य ।
किमु माधव इव माधव नरनाथ वृषस्य नो नियन्तासि ॥ ३४ ॥
श्रीरामसिहशावक तावकभुजयो प्रचण्डपाण्डित्यम् ।
विलसतु विमतमतङ्गजमण्डितगण्डस्थलस्य खण्डनत ॥ ३५ ॥
अरिकरिघटाविघट्टनदक्षो विक्षोभतो दधद्बहुवेगम् ।
नवसुन्दरीजनमनोदरीविहारी विभाति माधर्वासह ॥ ३६ ॥
उद्दामचन्द्रभवने सौरभवति निष्कुटे समन्दारे ।
माधव निर्विश नितरा यौवनलक्ष्मी सम दारै ॥ ३७ ॥
माधव वय वदामो मानसमिव सौरसहित त्वाम् ।
वनमिव शोभितमाल बालमिव मृदङ्गगतिलोलम् ॥ ३८ ॥
निचययुगनीचभवन श्यामकचश्रीर्विदग्धचेता भो ।
त्वमिव विभो तव वैरी किंतु मया तत्र चौर्रता दृष्टा ॥ ३९ ॥

---

१ महिष्यास्तापतप्ताया पङ्कविलोठनमुचितम् २ आर्यासु आकलिता प्रकृति स्वभावो यस्य, पक्षे आर्याप्रकृती च्छन्दसी ३ मणिगणसमूहेन प्रसन्नमुखशोभ , पक्षे मणिगणनिकर-वक्त्र-श्रीनामानि च्छन्दासि ४ प्रतिष्ठया माहात्म्येन जातिविशेषेण च ५ माधवता उमाधवता च अर्थत्रयवाची ६ चन्द्रगरुडनीलमणश्रेष्ठे ७ पार्वतीम र्ष्यर्जुनजयासङ्गी ८ महोक्षस्यारिष्टस्य धर्मस्य चेति त्रयोर्थी ९ आर्यागीतिरियम् १० 'चन्द्रमहल' इति प्र० ११ सारमेभ्यो हित पराक्रमयुत च १२ शोभिनस्त माला शोभिता मालाश्च यस्मिन्, १३ मृदङ्गश्वासौ गतिलोलश्च मृदङ्गगतिषु लोलश्च १४ दस्युता चकारस्य रत्न च तथा च निचययुग् अनीचभवन श्यामकचश्रीविदग्ध- चेता इति

दधदपि कलानिधित्वं दोषाकरतां कदापि न स्पृशसि ।
श्रीदोऽपि माधवविभो कुवेर[1] इति न प्रसिद्धोऽसि ॥ ४० ॥

कुप्यन्तु केऽपि देवास्तदपि नृप वयं विशिष्य विश्वस्मिन् ।
दुर्गेशम्[2] एकमेव स्तुमो भवन्तं भवं तं वा ॥ ४१ ॥

वहुधीरणं[3] नृप त्वां पुनरपि वहुधीरणं[4] वयं विद्मः ।
जगति समुद्धाररुचि[5]स्त्वमसि समुद्धाररुचि[6]रत्र ॥ ४२ ॥

नृपते मुक्ताहारो[7] भूषितदारो[8] विलक्षणस्त्वमसि ।
रिपुरपि मुक्ताहारो[9] भूषितदारो[10] विलक्षणो[11] भवतः ॥ ४३ ॥

मणिपीठशायिपादस्तथापि राजन्कुशेशयाङ्घ्रि[12]स्त्वम् ।
सत्त्वपवित्रोऽपिपरं जगद्भिरुक्तो रजःपूतः[13] ॥ ४४ ॥

यशसाऽर्जुनः सुनयनानयनैः पीतो गुणार्जने रक्तः ।
वलसत्कृतौ च कृष्णश्चतुरो वर्णान्[14] विभर्षि माधव भोः ॥ ४५ ॥

भूभृद्[15]अभिलषितपादो भूभृत्पादस्पृहो[16] विनोदार्थम् ।
दुर्गेशैः परिचरितस्त्वं नृप परिचरितदुर्गेशः ॥ ४६ ॥

कलितोऽपि नृसिंहतया[17] क्ष्माधव माधव हिरण्यकशिपु[18]स्त्वम् ।
प्रथितोऽपि सदारामो[19]ऽलङ्केशः[20] इति प्रसिद्धोऽसि ॥ ४७ ॥

अयि वीर विचित्रविभव विग्रहरहितो[21]ऽपि वाढविग्रहवान्[22] ।
अनलसमो[23]ऽपि नलसम[24]स्त्वमशेषवलो[25]ऽपि शेषवलैः[26] ॥ ४८ ॥

---

१. कुत्सितदेह एकपिङ्गश्च. २. दुर्गाणां दुर्गायाश्चेशम्. ३. वहुमेधाविनम्. ४. बहुयुद्धम्. ५. जगदुपकारप्रीतिः. ६. समुत् हाररुचिः, इति पदे. पुनरुक्तवदाभासोऽत्रालंकारः. ७. मौक्तिकहारः. ८. अलंकृतस्त्रीकः. ९. त्यक्ताशनः. १०. भूस्थितस्त्रीकः. ११. विलेषु विवरेषु क्षण उत्सवो यस्य. १२. दर्भस्थितपादः, कमलपादश्च. १३. रजोगुणविशिष्टः, क्षत्रियनामान्तरं च. १४. रूपाणि ब्राह्मणादींश्च. १५. राजभिः. १६ क्रीडायै पर्वतप्रत्यन्तेषु स्पृहा यस्य. १७. नरहरित्वेन पुरुषश्रेष्ठत्वेन च. १८. दैत्यविशेषः सुवर्णपर्यङ्कश्च. १९. दाशरथिः श्रेष्ठोपवनश्च. २०. राक्षसविशेषः, अलं बहवः केशा यस्य स च. एतेन पित्रंशभूयस्त्वं व्यज्यते. २१. कलहरहितः. २२. दृढदेहः. २३. अग्नितुल्यः, जागरूकशोभश्च. २४. नलभूपतुल्यः. २५. पूर्णसैन्यः. २६. शेषतुल्यपराक्रमः.

प्राहुर्भूप भवन्त कूर्मकुलोत्पन्नमप्यजलकेलिम् ।
स्फुरदङ्गमप्यनङ्गस्फुरण शतपत्रमप्यपङ्कं भवम् ॥ ४९ ॥
माधवासिह भवन्त वैलिसवृतमप्यमवृत वेलिभि ।
नक्षत्रेशरुचिमपि क्षेत्रेशरुचि वय विद्म ॥ ५० ॥
बहुवाहिनीसहस्रैरुल्लासिनमप्यनिम्नगोल्लासम् ।
विष्वक्सेनमपि जना भवन्तमजनार्दन प्राहु ॥ ५१ ॥
विभ्राजसे प्रचेतास्तथापि लोकेषु विप्रचेतास्त्वम् ।
वसुदेवतया कविभि स्तुतोऽपि नृप माधवश्चित्रम् ॥ ५२ ॥
माधव भूप भवानिह परमतरङ्गोऽपि भङ्गनिर्मुक्त ।
अगणितशरसपत्तिस्तथापि पक्षशरसपत्ति ॥ ५३ ॥
मुक्तोऽपि सदापत्तिभिरविमुक्त पत्तिपङ्क्तिभि परित ।
नयरुचिरपि विनयरुचि स्फुरति सदन्तोऽपि नूनममदन्त ॥५४॥
दुर्योधनोऽपि भीमो धृतराष्ट्रतया श्रुतोऽपि चक्षुष्मान् ।
त्व माधवोऽपि राजन्नविखण्डितदन्तवक्त्रोऽसि ॥ ५५ ॥
कुण्डल्यप्यभुजगो भूपतिर्वपुरप्यभूपितश्चित्रम् ।
विद्वेषस्फूर्तिरपि त्व माधव मुक्तविद्वेष ॥ ५६ ॥
परिफुल्लपारिजातस्तवकच्छविरप्यपारिजातश्री ।
माधव बलाभिरुचिरप्यबलाभिरुचिस्तत्रमाश्चर्यम् ॥ ५७ ॥

---

१ दलयोरभेद २ प्रमन्मथमस्यानवाहन च ३ कमठविरुद्ध मुकनिन च ४ वीररूपत ५ जगत्क्षणविशे.. ६ चन्द्रामम् ७ क्षपणोभम् अत्र सर्वत्र विरोधालकार ८ सेना नद्यश्च ९ अनुगानमतीगोवाम च १० मानविर-न्यम् ११ विष्णुभिन्न जनानन्दक च १२ प्रकृष्टमना वरुणश्च १३ विविचित्त-ऽवहाश्च १४ द्रव्यगरलेन च १५ पर्वभिन्नत्तमे धीगते मने द्वो । यतागो यस्य तत्रुप्रमर्तास्नायच १६ अपराजितोऽगमश्च १७ गावाट्ट १८ पदा-तिश्रेणिभि 'पल्टन' इति प्रसिद्धाभि १९ प्रसन्नवदन २० दुर्जनहत २१ इतवक्ष क्षत्रियविशेष, पक्षे नगराद्धा मुग यस्य स २२ सर्प कुण्डल माध २३ अतपोऽग्निश्च २४ अलङ्कृतदेह २५ प्रकृष्टदीप्ति २६ निर्द्वेष २७ त्यक्तद्वेष २८ अपारनवमद्भ्या

श्रीरामसिंहसूनो वपुषा [1]कामोऽपि [2]माधवो भासि ।
उद्दिश्य धर्मविधुरान[3]भिमन्युरपि [4]त्वमर्जुनो यशसा ॥ ५८ ॥

त्वं माधव क्षमाधव बत [5]सानुचरो[6]ऽप्यसानुचरः ।
भवरुचिरपि विभवरुचि[7]र्बलभद्रोऽप्य[8]बलभद्रोऽसि ॥ ५९ ॥

ज्वलनोपमः प्रतापस्तव न प्रालेयतोऽपि शीतः सः ।
नहि चेदनेन रिपवो दधते किमु [9]कम्बलान्प्रकम्पार्ताः ॥ ६० ॥

माधव विलोक्य भवतः सदोन्मिषन्तं यशोविधुं विशदम् ।
स विधुः कलङ्ककलुषः कलयति [10]कुमुदं विशेषेण ॥ ६१ ॥

[11]शरजन्मा [12]धनुरिद्धः [13]परभेदपटुर्मयूर[14]पत्रश्रीः ।
विजयाय भवतु भवतो माधव विशिखो [15]विशाखो वा ॥ ६२ ॥

गुणनिधान धनदानपर भुजजितवैरिसमाज ।
सुखी जीव शरदां शतं स्वच्छकच्छकुलराज ॥ ६३ ॥

[16]परस्वभावो[17]ऽप्यपरस्वभावः सदाऽरुणाभोऽपि न दारुणाभः ।
अधीश्वरश्रीरपि [18]धीश्वरश्रीस्त्वं [19]भूपरागोऽपि [20]रजोविहीनः ॥ ६४ ॥

अपि प्रमोदी बत विप्रमोदी हाराभिरम्योऽपि विहाररम्यः ।
[21]अपीनतेजाः परिपीनतेजाः श्रीमाधवे[22]न्द्रस्त्व[23]मपूर्ववृत्तिः ॥ ६५ ॥

[24]बिभर्षि भो माधवसिंह सज्जनान्[25]रसायनं जीर्णकलेवरानिव ।
[26]क्षिणोषि सङ्ग्रामभुवि क्षणाद्रिपून्कुपथ्यमातङ्कानिपीडितानिव ॥ ६६ ॥

---

१. प्रद्युम्न.. २. श्रीकृष्णश्च. ३. अभितः क्रोधोऽर्जुनसूनुश्च. ४. शक्रोऽर्जुनश्च. ५. सभृत्यः. ६. अश्वङ्गचरः. ७. बलेन भद्र यस्य. ८. निर्बलेषु भद्रकारी अबलिरामश्च. ९. रत्नकान्; तेषां दरिद्रत्वादिति भावः. १०. कमलं कुत्सितहर्षं च. ११. तृणविशेषजन्मा; पक्षे कथानुस्मरणीया. १२. चापसमृद्धः. १३. शत्रुभेददक्षः. १४. मयूरपक्षैर्मयूरवाहनेन च श्रोर्यस्य. १५. स्वामिकार्तिकः. १६. उत्कृष्टप्रकृतिः. १७. परद्रव्यारुचिः. १८. बृहस्पतिसंपत्तिः. १९. राजप्रीतिः. २०. रजोगुणहीनः. २१. सूर्यतेजा अपि. २२. श्रीमाधवेति संबोधनम्. इन्द्रः समृद्धः शक्रश्च. २३. अपूर्वदिगधिष्ठितो विलक्षणव्यापारश्च. २४. पोषयसि. २५. 'रसायनं तु तत्प्रोक्तं यज्जराव्याधिनाशनम्.' इति स्मरणात्. २६. नाशयसि.

त्वय्युद्यते दिग्विजयाय भूप भो हिरण्यगर्भश्चतुराननोऽभवत् ।
दुर्गाश्रयोऽप्यास दिगम्बरो हर श्रियं व्यधाद्वक्षसि शङ्कया हरि ॥६७॥
गी श्री सपत्न्यावपि मन्त्रमेत्य प्रतार्य सद्य पुरुष पुराणम् ।
भवद्गुणौघग्रथिते भवन्त समीयतुर्द्रागुपभोगदक्षम् ॥ ६८ ॥
पलायिताना तव वैरिसुभ्रुवा भवद्भटैर्लुण्ठितभर्तृसंपदाम् ।
मुखानि विम्लानमहासि सद्यर्विधुतुदग्रस्तशरद्विधुद्युतिम् ॥ ६९ ॥
त्वदाश्रिताना समदेभवन्ति गृहाणि लोकस्य मुदे भवन्ति ।
अतस्त्वदीयानि समुल्लसन्ति यशांसि कूर्मक्षितिपाल सन्ति ॥ ७० ॥
त्वया धृत माधव यर्हि यौवन तदा त्यजन्राज्यमरिर्ययौ वनम् ।
द्विजेषु दाने प्रथयन्यशोऽभितस्त्वमेव जातोऽसि जगत्सु शोभित॰ ॥७१॥
शरद्विधुश्चन्द्रिकयेव कीर्तितस्त्वमत्र लोके रुचिर प्रकीर्तित ।
किं च प्रतापे प्रचलोऽसि सिंहत सं यत्त्वयोद्यम्य बलादसि हत ॥७२॥
द्विपा हतेर्धर्मधृते समन्ततस्तव प्रतापो यशसा सम तत ।
अनारत रक्षतु वीरमाधव क्षमाधव त्वा भगवान्रमाधव ॥ ७३ ॥
नृपतिमाधव एष कृतप्रजापरिचयोऽरिचयोद्धरणोद्धुर ।
जयपुर परित परिपालयन्नुचिरमुच्चिरमुल्लसतु श्रिया ॥ ७४ ॥
इह धुरन्धरदेशधुरधर प्रवरसगरसीम्नि महामहा ।
नरमणी रमणीगणमन्मथो विजयते धरणीधवमाधव ॥ ७५ ॥
श्रीमाधवेन्द्रो गललम्बमानरत्नप्रभाकर्बुरहारहारी ।
लीलावतीनेत्रचकोरचक्रचोचूष्यमाणाननचन्द्रधारी ॥ ७६ ॥
श्रीमाधवभ्रूगतिसूचितासु प्रचण्डकीलास्वपि पावकस्य ।
सामन्तवीरा शतश समन्तादग्रेऽहमग्रेऽहमिति ब्रुवन्ते ॥ ७७ ॥

---

१ सुवर्णगर्भ २ दिगम्बरो निष्कञ्चनोऽपि दुर्गाश्रय आसेत्यन्वय ३ भागु रिमतेऽल्लोप ४ समदहस्तिमन्ति ५ समीचीनानि, अत्र यमकमलङ्कार ६ तती यार्थे सार्वविभक्तिकस्तसि ७ पञ्चम्यास्तसिल् ८ यत्पञ्चमात्स सिंहस्त्वयाऽसिमुद्यम्य बलाद्धत इति योजना ९ हतेर्धृतेरिति पञ्चम्य त १० विस्तृत ११ धुरन्धरदेश 'ढुण्ढार' इति प्रसिद्ध

अयि क्षितिप माधव त्रिदशसुन्दरीगीतिगं
निशम्य तव कामनीयकमपास्तकामस्मयम् ।
सहस्रनयनाकुलं निजकलेवरं लोकय-
न्स कौशिकामिव[1] स्वयं[2] मनसि कौशिको[3] मन्यते ॥ ७८ ॥

सद्धानोऽपि[4] मदोद्गमेन[5] रहितः क्वान्तो[6]ऽप्यकान्तक्रमः[7]
सौधस्थोऽपि[8] सदावनस्थिति[9]रहीनोऽपि[10] [11]द्विजिह्वोज्झितः ।
[12]काव्यप्रीतिरपि प्रशंसित[13]बुधः कच्छो[14]ऽपि मुक्तो [15]जलै-
स्त्वादृङ्माधव नेक्षितः क्षितिपतिः कुत्रापि नाकर्णितः ॥ ७९ ॥

सहायस्त्वद्दोष्णोरधिरणमसौ सांप्रतमसि-
र्ज्वलज्ज्वालाजालैर्ज्वरित इव पश्य प्रतपति ।
अतो राजन्दृष्यद्रिपुकठिनकण्ठस्रवदसृ-
क्कपटीरैरालेपं रचय रुचिरं किं चिरयसे ॥ ८० ॥

प्रकामं प्रागेवाचिनुहि सितमुक्ता नृप न चे-
त्त्वयि प्राप्ते सिन्धोस्तटमरिकुलानि क्षपयितुम् ।
लसत्सिन्दूराढ्यं त्वदिभलुलितं मेघगलितं
स्थितं [16]तोयं शुक्तावरुणतममुक्ता जनयिता[17] ॥ ८१ ॥

प्रतापैस्ते कल्पानलकटुभिरावर्तिततया
क्रमात्पिण्डीभावं समनुभवति क्षीरजलधौ ।
तदुद्यद्बाष्पोष्म[18]क्षुभितफणितल्पे कथमहो
न जाने भूजाने स्वपिति स पतिः सिन्धुदुहितुः ॥ ८२ ॥

---

१. घूकमिव. २. आत्मानम्. ३. इन्द्रः. ४. अत्रापि विरोधाभासः. उत्कृष्टवितरणः समदश्च. ५. गर्वाविर्भावेन. मदनाविर्भावेण च. ६. सुन्दरोऽपि. ७. असुन्दरक्रमो दुःखान्तक्रमश्च. ८. प्रासादस्थितिः. ९. वनस्थिती रक्षणस्थितिश्च. १०. सर्पेशः पूर्णश्च ११. सर्परहित. पिशुनत्यक्तश्च. १२. शुक्रप्रीतिः कविकर्मप्रीतिश्च. १३. स्तुतवैयाकरणनैयायिकपण्डित. स्तुतदेव स्तुतचन्द्रपुत्रश्च. १४. कच्छान्वयो जलप्रायदेशश्च. १५. जलैः जडैश्च. १६. कर्तृपदम्. १७. जनयिष्यति. १८ वाष्प 'वाफ' इति प्रसिद्धम्. अत्र 'बाष्पोष्मा वै वह्निमाविश्य जन्तोः' इति माधवनिदानं निदानम्.

आस्ते विष्णोरुदरभवन याऽवलम्ब्य त्रिलोकी
शेकु स्थातु नहि बहुतया तत्र चेत्त्वद्यशासि ।
व्याप्याशेषा शशधरलसच्चन्द्रिकासोदराणि
भित्त्वा नाभि नृप बहिरगु पुण्डरीकच्छलेन ॥ ८३ ॥

प्रौढ प्रतापतपनस्तव दु सहोऽय
यत्सतत तपति तेन वितर्कयामि ।
श्रीमाधव क्षितिपसिह गमिष्यति द्रा-
गस्त प्रवृत्तिररिकीर्तिसरोवराणाम् ॥ ८४ ॥

जयपुरपरिवृढ नृपतिलक वितर
वसु मयि विदुषि तनयसुखमनुभव ।
द्विजवरनिकरमधिकतरमुपचर
चिरमधिधरणि विलस रघुपतिरिव ॥ ८५ ॥

ये श्रीमच्चरकेक्षणा प्रनिलमच्छ्रेआदिसपत्तयो
भास्वन्नागनला समस्तजनतातद्वच्छिदाकोविदा ।
ये चन्द्रोदयतोऽधिकद्युति यशो विस्तारयन्ति क्षितौ
तेऽमी वैद्यनृपा वय नृप भवन्नैरुज्यमाशास्महे ॥ ८६ ॥

ये दन्त्यादिभिरुन्नता गुणवशाद्विश्व करे कुर्वते
ये पञ्चाननखण्डनेषु कनकश्रीमण्डिता पण्डिता ।
लोके सुश्रुतकीर्तय कृतधनोत्सर्गा प्रजासु प्रभो
वाञ्छामस्तव माधवेन्द्र कुशल ते वैद्यराजा वयम् ॥ ८७ ॥

अयि त्वया यैत्र वय नियोजितास्तव क्षमाशक्र कदापि मास्तु तत् ।
रणेपु राज्ञा निहतद्विपामपि स्तम्बेरमा कि न भवन्ति वल्लभा ॥ ८८ ॥

---

१ वृत्तान्त २ अचलधृतिनामक छन्द ३ चरकसहितादर्शना, दूतनेत्राश्च ४ छत्रीपधिरुजश्च ५ नागवलौपधिर्हस्तिनश्च च ६ रसविशेषादिन्दूदयाश्च ७ आपधिविशेषादिभिर्हस्त्यादिभिश्च ८ सुण्ठी जगध ९ आटरूप सिंहश्च १० कपिकच्छूर्गर्भे च ११ पिन्न गोभा च १२ सहितावियोपरास प्रसिद्ध-यशसश्च १३ धन धान्य द्रव्य च १४ रोगचिकित्साकर्मणि । नन्वेव सति महता कि प्रयोजनमित्याशङ्क्याह १५ रणेष्विति

दीनं द्विजोत्तममिमं प्रतिपक्षलून-
पक्षं प्रसिद्धनिजपक्षतया प्रयोज्य ।
सद्यः समुद्धर धराधव माधव त्वं
यस्माद्विराजसि भुवि द्विजराजकीर्तिः ॥ ८९ ॥

सत्काराय किमुद्यतौ कवयतां कल्पद्रुचिन्तामणी
सूर्याचन्द्रमसौ जनावनकथादत्तैकमत्यौ किमु ।
कल्याणाय कृतक्षणौ[1] किमथवा तौ वज्रपाशायुधौ
तर्कः प्रोदयते जयोदयपुरीपालौ[2] पुरः पश्यताम् ॥ ९० ॥

रम्भा[3]रम्यरुचो विचित्रतिलका[4]ः श्रीखण्ड[5]गौराः पिको-
ल्लापाः सौरभसंभृताः समदना[6] विस्फूर्जदेला[7]ननाः ।
रुद्धा नो कितवै[8]र्नवीनवयसो[9] राजन्नशोकाश्रिय-
स्त्वामुच्चै रमयन्तु संप्रति सदारामा[10]ः स्फुरद्विभ्रमैः ॥ ९१ ॥

विद्याशीलगुणोज्ज्वलं निजतपोदासीकृतारिव्रजं
प्रौढासिद्युतिदीपितं मणिमहोराशिस्फुरद्विग्रहम् ।
पायात्पाशिपराक्रमं नयकलावन्तं भवन्तं विभो
राज्यासीनमनेकवीरविलसन्नासीरमाशर्मिम ॥ ९२ ॥

प्रबलप्रतापविभावितकल्पविभाकर वितरितवित्तभर कविताकलावते
हंहो निजरंहोनीचीकृतजवनपवन संततमवनयन नूतनशुभायते[11] ।
कृष्णपद[12]भावमङ्गीकुरु संगीतरसिक विविधभङ्गीविबुध दीक्षित दयाव्रते
क्लेशकदन सुन्दरवदन कुन्दरदन रूपमोहितमदन माधव धरापते[13] ॥ ९३ ॥

---

१. कृतोत्सवौ. २. जयपुरीपालमुदयपुरीपालं चैकदात्रैकत्र स्थिताविल्यर्थः. ३. रम्भा कदली स्वर्वेश्या च. ४. वृक्षविशेषो विशेषक च. ५. उभयत्रापि चन्दनचन्दिराः. ६. सद्वृक्षविशेषाः सकामाश्च. ७. विस्फूर्जन्त्य एलालता आननेषु प्रारम्भेषु येषां ते, विस्फूर्जदेलान्याननानि यासां ताश्च. ८. धत्तूरैर्धूर्तैश्च. ९. नूतनपक्षिणो नूतनवयस्काश्च. १०. सन्त आरामाः सदा रामाः कान्ताश्च. ११. नूतना शुभा चायतिरुत्तरकालो यस्य तत्सबुद्धिः. १२. भगवच्चरणभक्तिं कविपदभावं च. १३. घनाक्षरं छन्दः. उत्तरं च.

चन्द्रभवननिष्कुटकलितकुक्कुटरण तरलतुरगरङ्ग सद्गुणगुच्छतते
मानिनीजनमानसमीनकेतन नवीन पीनभुजदण्ड पौरपालनसमुन्नते ।
कृष्णकविरद्य वक्ति मद्यवासितवदन वैभवसदन वीर निर्विश सुख रते
मदगजराजगते विरचितशत्रुहते बुधगणगीतमते माधवमहीपते ॥ ९४ ॥

श्रीमत्कुन्दननन्दनवैद्यश्रीकृष्णरामकविरचिते ।
जयपुरविलासकाव्ये सपूर्णोऽयं चतुर्थ उल्लास ॥ ४ ॥

---

## पञ्चम उल्लासः ।

ये केऽपि गुणानन्ता जयनगरीनायकस्य सामन्ता ।
ये वा मण्डितमतय पण्डितपतय स्तवीमि तान्सर्वान् ॥ १ ॥

श्रीमन्माधव सख्यमेपि तनुपे त्व भीमसेनादर
विख्यातो युधि साभिमन्युरविकप्रीति सुभद्राश्रये ।
द्रोणाधीतसमस्तशस्त्रनिगमो दीनद्विजोद्धारको
धत्से भो विजय प्रभो विजयता सर्वप्रकारै स्फुटाम् ॥ २ ॥

विशुद्धनाथावतवशकेतुर्हेतु स्थिते क्षत्रियधर्मसेतु ।
चमूपुरीराज्यपदप्रतिष्ठो गोविन्दसिहो भुजभग्नसिह ॥ ३ ॥

विनीतबुद्धि क्रमवीतशैशव कटीतटीचन्द्रदसिर्महाबल ।
समृद्धसामोदपुरीपतिर्महामति फतेसिंह इति स्म रावलः ॥ ४ ॥

अतन्द्रचन्द्रोज्ज्वलकीर्तिचन्नुरो रत्नस्फुरद्भूषणभूषितच्छवि ।
प्रचण्डदोर्दण्डधुतारिमण्डलो राजावतो राजति नारसिहकः ॥ ५ ॥

उदग्रगोर्गावतगोत्रगौरवो महारज पूतभटोत्कटच्छट ।
स्वरूपसपत्तिपरास्तमन्मथ स लक्ष्मणो लक्षितलक्षणोज्ज्वल ॥ ६ ॥

---

१ 'चन्द्रमहल' इति प्रसिद्धस्य निष्कुटे कलित कारित कुक्कुटरणो येन २ द्रोणो नाम महाराष्ट्रब्राह्मणेषु वेदविद्यादक्षकुलविशेषस्तस्माद्द्रोणाचार्याच्च ३ विजयसिंह इति नामैकदेश ४ अर्जुननाम ५ क्षत्रियकुलविशेषस्य मता ६ विजयसिंहस्य पुत्र ७ क्षत्रियकुलविशेषसज्ञेयम्. ८ इदमपि तथा ९ लक्ष्मणसिंह

य: खेतडीपत्तनराज्यपीठप्रतिष्ठितः खड्गवशीकृतारिः ।
समस्तशेखा[1]वतशेखरश्रीहिंहो स जीयाद[2]जितादिसिंहः ॥ ७ ॥

अनीकरङ्गी रजनीकराननो रसी करण्डस्थितमाल्यमोदितः ।
वशी कै[3]रम्भार्पणतर्पिताध्वगः स सी[4]करेशोऽस्ति सपत्नभीकरः ॥ ८ ॥

वरूथिनीभिर्द्विपतामरुंतुदः पुरुप्रभावोऽगुरुधूपिताम्बरः ।
चरुश्छवीनां गुरुरेष धन्विनां मरुत्तरुश्रीवैंगरूपुरप्रभुः ॥ ९ ॥

स्वसिंहनादोनितसिंहनादो रंहोवतामग्रगतिः परं हो ।
समग्रसामन्तसमाजसिंहो विभाति हंहो रघुनाथसिंहः ॥ १० ॥

विरोधिवीरक्षयकर्मधीरः कल्याणरायस्तुतिपूतकायः ।
चकास्ति दिग्गीतगुणः स दिग्गीविभुर्विहारी तरवारिधारी ॥ ११ ॥

अयं स्वयं कल्पितगद्यपद्यः पराक्रमक्रान्तपरान्वयश्रीः ।
प्रतापवर्मा परमप्रतापः प्रमोदतामीश्वरदेश्वरो द्राक् ॥ १२ ॥

अये दत्तग्राम 'स्तुतिषु सुकृतग्राम सुतरां
समुद्यत्सङ्ग्रामज्वलितजय सङ्ग्रामनृपते ।
लभस्व श्रीमन्तं समधिकमवन्तं निजजना-
न्सुतं विद्यावन्तं गुरुरिव भवन्तं हि भवतः ॥ १३ ॥

रणोच्छलच्छूरघटाधुरंधरा यशश्छटाक्षालितदिक्परम्पराः ।
उदञ्चदच्छच्छुरिकाप्रभाङ्कुराः सहस्रशः संप्रति सन्ति ठक्कुराः ॥ १४ ॥

शस्त्रच्छटाच्छादितसर्वदिक्तटा मुदाऽनुगच्छन्ति भटा यमुद्भटाः ।
सेनापतिः कच्छपते रणोत्कटः स कोऽपि वक्षी यवनो न किं स्फुटः ॥ १५ ॥

---

१. क्षत्रियविशेषाः. २. अजितसिंहः; अयं सामन्तशिरोमणिः. ३. दधिसक्तूनाम्. ४. सीकरपुरनाथः; अयमपि महासामन्तः. ५. सावंतसिंहः. अयमर्धराज इति प्रसिद्धः. ६. अयमचरोलपुराधिपः फिरङ्गविद्याचणश्च. ७. दिग्गी पुरीविशेषः तत्रैव श्रीकल्याणरायनामा विष्णुस्तिष्ठति प्रतापसिंहनामायं सामन्तः. ८. प्रतापसिंह. ९. 'ईसरदा' इत्यस्य शुद्धं नामेश्वरदेति. १०. अयं सामन्तचूडामणि., उनियारानगरीपतिः नरूकक्षत्रियः. ११. क्षत्रियाः ठाकुरशब्दस्य क्षत्रियवाचकत्वे प्रमाणं राजतरङ्गिणी. १२. संज्ञाशब्दोऽयम्.

स्तुवन्ति य प्रौढिपु लार्डलालित महाफिरङ्गा रणतुङ्गबाहव ।
स श्रीमहाराजनिदेशसादरो जीयात्प्रजाप्रीतिरजेण्टसाहबः ॥ १६ ॥

नो दोषाकरभावमेषि न पुन सलक्ष्यसे लाञ्छितो
नो मुष्णासि गुरुस्त्रिय न कुमुद कुत्रापि पुष्णासि वा ।
धत्से न क्षयरोगितामपि न वा मित्रोदये ताम्यसि
ज्ञात वा तमसा निराकरणतस्त्व कान्तिचन्द्रः स्फुट ॥ १७ ॥

दक्षैकबन्धुरमृतच्छविरच्छवृत्त
कुक्षिंभरि शशमृगैरुदयानुरागी ।
राजत्कलो द्विजपती रुचिराम्बरश्री-
स्त्व कान्तिचन्द्र वद किं न बुधप्रियोऽसि ॥ १८ ॥

दधत्कलामुदय गत शम्भुमौलिमाक्रम्य ।
जयति कान्तिचन्द्रो बलादन्धकारमाचम्य ॥ १९ ॥

यस्योत्पत्तिरभूत्पुरोहितवराद्ग्रामप्रमादादहो
यस्योद्वाहमह व्यधत्त विधिवद्ग्राम प्रसादान्नृप ।
सोऽय मेदुरमूर्तिरुज्ज्वलयशा श्रीमाधवक्ष्मापते-
र्दानाध्यक्षपदे विराजति जगन्नाथप्रसादः सुधी ॥ २० ॥

शरत्पूर्णचन्द्रोदयास्यप्रकाश महानर्घमुक्तावलिस्वच्छहासम् ।
धनापूरिताशेषविद्वज्जनाश मदाशीर्वचोऽव्यात्सदा रामटांसम् ॥ २१ ॥

---

१ लाड इति महाराज्ञीमहामन्त्रिसज्ञा २ अजेण्ट इत्यपि राज्याधिकारिविशेषसज्ञा ३ रूढिशब्दोऽयम् आह्वेन सहित इति यवयोरभेदाद्यौगिकोऽपि यमकमलकार ४ राज्याधिकारिणाम ५ अय महाशयोऽस्मन्महाराजस्य महाराज्यधुरधरो महामन्त्री वाङ्ग फिरङ्गविद्याचणश्च ६ चतुर्थस्यैतद्दोहाच्छन्द कला दण्डनीतिविद्या दधत्कान्तिचन्द्रनामा मन्त्रिप्रवर शम्भुसिहस्योपरिस्थानमाक्रम्योदय गत सन् बलाद्बुद्धिवैभवादन्धकारमुत्सोचाधीनतया जायमानमन्यायमाचम्य निरस्य जयतीत्येकोऽर्थ चन्द्रोदयरूपो द्वितीयोऽर्थ स्पष्ट एव रूपकातिशयोक्तिमाश्रित्य नायिकामुखवर्णनरूपस्तृतीयोऽर्थ तत्र शम्भो कुचयोर्मौलिमुपरिभागम् रूपकातिशयोक्त्यत्र नखक्षतवर्णनरूपश्चतुर्थोऽर्थ इति ७ विवाहोत्सवम्, ८ रामसिहो नृप स्वयमेव गृहस्थ्यकृत्ययेन प्रसन्नतयाऽकरोत् ९ सान्द्रस्निग्धशरीर १० अस्मद्भक्तो 'राजमुन्शीति' इति प्रसिद्ध कायस्थ

उच्चैर्यशोव्याप्तदिगन्तरालः स्वसौकुमार्याधरितप्रवालः ।
दानाय यत्कोशगृहे न तालः सोऽयं चिरं चञ्चतु कृष्णलालः[1] ॥ २२ ॥

कपाटवक्षःस्थलपुष्पमालः कान्ताजनस्वान्तसरोमरालः ।
जनार्दनोदारकथाविशालः स्तुत्यो न केषामयमस्ति बालः[2] ॥ २३ ॥

क्रमात्समस्तास्वपि कक्षिकासु[3] यः श्रूयते दत्तमहापरीक्षः ।
चिरं स जीयाज्जयपत्तनीयवाग्वेश्मधुर्यो हरिदासशास्त्री ॥ २४ ॥

यः संस्कृतः संस्कृतवाग्विलासे सत्पण्डिते मण्डितभक्तिरुच्चैः ।
फिरङ्गविद्यास्वनवद्यबुद्धिश्चिरं स जीयाद्धरिदासशास्त्री ॥ २५ ॥

हरिर्दास्यस्फुरितरुचेः[4] कीर्तिरपि तव हरिदास हरिदास्या ।
परदास्यपरस्तु परः पलायतेऽतीत्य हरिदास्यम् ॥ २६ ॥

गुणानामावासं कलितमृदुहासं कविकला-
विलासं सोल्लासं प्रसृमरमहासंपदुदयम् ।
स्फुरद्विद्याभ्यासं कृतखलनिरासं मम कृतिः
स्फुटोद्यद्भासं सपदि हरिदासं सुखयतु ॥ २७ ॥

वादिप्रौढतमिस्रखण्डनविधौ मार्तण्डबिम्बोदयः
काणादादिसमस्तशास्त्रविपिनप्रोद्दामकण्ठीरवः ।
संसारव्यवहाररत्नजलधिर्वाक्सारिकापञ्जरः
क्षीराम्भोनिधिफेनपाण्डुरयशाः श्रीजीवनाथो[5] गुरुः ॥ २८ ॥

षट्शास्त्रशिक्षाकुशलेन येन व्युत्पत्तिवादे समकारि टीका[6] ।
पाण्डित्यसीमा स गुरुर्गुरूणां[7] श्रीजीवनाथो बुधवृन्दवन्द्यः ॥ २९ ॥

---

१. महाराजपार्श्वसेवकः. २. अयमपि महाराजकृपापात्रं सेवकविशेषः. ३. एन्ट्रेन्स, आर्ट्, बी ए, एम् ए, इति प्रसिद्धासु. ४. हे हरिदास हरिदास्ये स्फुरिता रुचिर्यस्य तस्य तव कीर्तिरपि हरित्सु दिशास्वास्या स्थितिर्यस्यास्तयाऽस्ति, तत्र शत्रुः परदास्यपरः सन्हरित आस्यं मुखमतीत्य पलायत इत्यर्थः. ५. एते कवेरस्यान्येषां चात्रत्यानां बहूनां श्रीगुरवः. ६. इयं च प्रसिद्धकृष्णंभट्टीतोऽन्याऽत्युन्नमाऽतिमहती चेदानीं जातप्रायैव. ७. गुरूणां महापण्डितानां बहूनां श्रीनारायणभट्टादीनां राजगुरूणां च.

विद्वद्विहारी विभवाधिकारी विपद्विदारी दुरितप्रहारी ।
गोपालधारी स्वयश प्रसारी श्रीब्रह्मचारी सुकृतप्रचारी ॥ ३० ॥
सिद्धान्तकौमुद्युचितो बुधाग्रणी समुच्छलच्चामरवीजितच्छवि ।
सन्मैथिल सौम्यपवित्रदर्शनो राज्ञो गुरु श्रीनृहरिर्विराजते ॥ ३१ ॥
गोविन्दभक्तिविषये जितनारदर्पि-
दीने सुग्द्रुममम श्रुतपारदर्शी ।
दीनेषु दर्शितदय कविसङ्गहर्षी
त्व श्यामसुन्दर विशालयशो विभाषि ॥ ३२ ॥
दुर्गास्तव सरसिकाष्टकमुज्ज्वलाभ
निर्माय यो जयपुरे प्रददौ बुधेभ्य ।
साहित्यविच्चटुलचामरचर्चितश्री-
र्नारायणो जयति राजगुरुर्गरीयान् ॥ ३३ ॥
माराकृतिर्निजगभीरतयाऽस्तपारा-
वाराशय स्फुरदशेषगुणैर्विकारा ।
धारा गिरा वहति यस्य मुखादुदारा
नारायण स समुपैतु मुद सुमारा ॥ ३४ ॥
सरस्वती यो हृदये दधाति सदा समाश्लिष्टतनु श्रियापि ।
दुर्गाप्रसादाय पुन प्रयासी नारायण कोपि विचित्र एष ॥ ३५ ॥
अभिलषति [10]वैनतेय चामरैर्महित ससत्यभामो य ।
नारायण स साक्षात्कीर्ति मदीयामशोधयत्कृपया ॥ ३६ ॥

---

१ एते च महात्मानो वर्तमानमहाराजाना परमपूज्या श्रीवृन्दावनकृतस्थितय शापानुग्रहसमर्थमन्या श्रीगोपालचरणारविन्दमकरन्दमिलिन्दमानसा श्रीभागवतैक-निष्ठा श्रीगुरवो विराजन्ते २ सन् मैथिल ३ श्रीनरहरिरित्यप्येषा नाम ४ एतेचाग्रन्यराजाराध्यश्रीगोविन्ददेवस्याराधनाधिष्ठता श्रीगोस्वामिनो गौडमाध्वा वाश्च ५ एते चाधुन्यमहाराजाना विद्यागुरव कविकुलगुरवश्च महाराष्ट्रा ६ गुणी-धानां वन्दीस्थानमित्यर्थ ७ धर्मदम् ८ महती ९ एतन्नामकाय मिश्राय तदर्थं पुस्तकादिसपादने प्रयासी श्रीकुलदेवताया प्रमादात च १० गरुड पक्षे वै नते पुरुषे अयं शुभावह विधिम् ११ चामराभ्या पूजित, च देवपूजित १२ सत्यभामया तथ्यकान्तिलक्ष्मीभिश्च सहित

गङ्गां[1] धारयते कदापि न पदा नाधो विधत्ते [2]द्विजं
नो वैकुण्ठ इति श्रुतो [3]जलनिधेः सङ्गे न यः स्निह्यति ।
[4]सच्चक्रं क्वचिदेव न क्षिपति नो [5]शङ्खेन [6]शं खेलति
श्रीमन्तं वयमन्वहं कमपि तं नारायणं मन्महे ॥ ३७ ॥

सन्त्येव प्रतिभाजुषोऽत्र शतशः प्रौढप्रभावा [7]बुधा
येषां बुद्धिसमृद्धिरप्रतिहता जागर्ति वेदेष्वपि ।
किं त्वेषोहमचिन्त्यचित्रचरितं सुच्चक्रचञ्चद्रुचिं
श्रीनारायणमेकमेव विबुधं वन्देऽरविन्देक्षणम् ॥ ३८ ॥

जिह्वाग्रविस्फूर्जितसर्वभारतः परं नतः सद्गुणगुच्छभारतः ।
विराजते राजगुरुः सभारतः स **चन्द्रदत्तः**[8] परमप्रभारतः ॥ ३९ ॥

तन्वानो रहसि रसेन शक्तिपूजां धिन्वानो बहुविधभोजनैः स्वशिष्यान् ।
मन्वानो मनुनिगमं[9] पुमर्थहेतुं **मन्वा**[10] नो किमिह मम प्रशंसनीयः ॥ ४० ॥

**राजीवलोचन**बुधेन समस्तशास्त्रा-
ण्यालोच्य रामवचसाऽरचि धर्मचन्द्रः[11] ।
याभ्यामपूरि स ततोऽन्विह **कृष्णलक्ष्मी**[12]-
**नाथौ** बुधौ कथय कस्य न संमतौ तौ ॥ ४१ ॥

सुदुस्तरव्याकरणार्णवे यो दधाति मन्थाचलभावमुच्चैः ।
स्वसंविदानन्दरसैकतानः स **विश्वनाथः**[13] स्तुतविश्वनाथः ॥ ४२ ॥

आस्ते महाभाष्यमहाचमत्कृतिः स्फुरन्महा व्याकृतिपाठिनां गुरुः ।
सारस्वतो **रामभजः**[14] स यस्य स सखा सतीर्थ्यः **शिवराम**[15]पण्डितः ॥ ४३ ॥

यो जागदीशीं सगदाधरीं विदन्नैयायिको मैथिलविप्रपुङ्गवः ।
प्रियाद्वयीलालितपादपल्लवः स **भायिनाथो**ऽस्ति सभासभाजितः ॥ ४४ ॥

---

१. व्यतिरेकोऽत्रालंकारः. २. गरुडं. ब्राह्मणम्. ३. डलयोरभेदः. ४. सुदर्शनं सतां समूह च. ५. पाञ्चजन्येन मूर्खेण च. ६. सुखं यथातथा. ७. देवाश्च. ८. एते च कथाभट्टत्वेन राजगुरवो दाधीचाः. ९. मन्त्रशास्त्रम्. १०. संज्ञाशब्दोऽयम्. एते च दीक्षागुरवो गतमहाराजानाम्. ११. धर्मचन्द्रोदयनामको धर्मशास्त्रीयो महान्प्रबन्धः. १२. कृष्णशास्त्रिलक्ष्मीनाथशास्त्रिणौ तैलङ्गद्राविडौ. १३. मैथिलोऽयम्. १४. अयं पाठशालाध्यापकः. १५. अयमपि तथा.

सगृह्य काव्यानि पुरातनानि सशोध्य येनारचि काव्यमाला ।
विद्वत्सु य स्निह्यति सोयमास्ते दुर्गाप्रसादो मयि सप्रसाद ॥ ४५ ॥
शास्त्रार्थविध्वस्तविपक्षवादः पवित्रचर्याक्षपितप्रवाद ।
श्रीयन्त्रपूजापरमप्रसाद स मन्त्रशास्त्री सरयूप्रसादः ॥ ४६ ॥
चकार य स्वानुभवाष्टक तथा गीता जगौ दैशिकलावनीपदै ।
ज्ञानोदय स्वात्मनि घोषयन्स्वय नाथः स गोपीप्रथमोऽस्ति काव्यवित् ४७
प्रशस्यते स्पष्टयथार्थभाषणस्तत्त्वप्रदर्शी निरहङ्कृति कृती ।
विशेषतो व्याकृतिपक्वधीर्मया स जानकीलाल इति स्म माथुर ॥ ४८॥
व्याख्याविशेषैर्लघुकौमुदीं स्फुटीचकार यो व्याकृतिकल्पितश्रम ।
व्युत्पत्तिवित्तोऽमरवृत्तिशोधको न स्तूयते कै शिवदत्तपण्डित ॥ ४९ ॥
यजूंषि साङ्गानि सदा समभ्यसन्नौदीच्यजातिर्भगवत्युपासन ।
सुवर्णरज्जुत्रयनद्धकधरस्त्रिपुण्ड्रभालो हरिलालवैदिक ॥ ५० ॥
विभाति गङ्गादिमवल्लभास्पदे भङ्गो जगन्नाथ इति श्रुतो द्विजः ।
व्यापन्नपञ्चास्यपदे प्रतिष्ठित कचाचितोच्चाकृतिकुञ्जरो यथा ॥ ५१ ॥
शिरोमणिव्याप्तबुद्धिवैभव शनै शनै पाठयति द्विजात्मजान् ।
सदाऽग्रगण्यो गणितज्ञससदि महामनस्वी स भैयाजिदेवते ॥५२॥
भर्गस्तुति सत्कृतविप्रवर्ग प्रतिक्षण कारितपुण्यसर्ग ।
दैवज्ञरत्न विलसन्निसर्ग स केवलः केवलमस्ति गर्ग ॥ ५३ ॥
यो धर्मशासनपदाधिकृतोऽधिकश्री-
भासा दिशो दशरथप्रतण पिधत्ते ।
सल्लक्ष्मणाञ्चिततनुर्ननु सोऽपि चारु-
चर्यापरो रघुवरो[11] वेत्ते[12] [13]मैथिलोऽस्ति ॥ ५४ ॥

---

१ गोपीनाथशास्त्री दाधाच २ लड्डूजीति प्रसिद्धापरपर्यायोऽय दाधाच ३ गङ्गावल्लभजीपण्डितस्य ४ दैवज्ञ ५ मैथिलोऽयम् ६ केवलरामनामा ७ गर्गाचार्यरूप ८ 'अदालत' नामके पदेऽधिकृत, पक्षे धर्मरक्षणास्पदे ९ दशदिशो भासापिधत्ते–रथस्थितश्च, पक्षे दशरथसेवको भासा दिश पिधत्ते १० सच्चिन्हेनाञ्चितकाय, पक्षे सता लक्ष्मणेनाञ्चिता पूजिता तनुर्यस्य ११ एतन्नामा पण्डित पक्षे श्रीरामचन्द्र १२ वेदे हर्षे च १३ मैथिलविप्र पक्षे श्रीरामचन्द्रस्य राघवत्वेऽपि मैथिलत्वमिति महदाश्चर्यम्

अनङ्गविच्छित्तिरनङ्गशास्त्रे बबन्ध यो [1]बन्धमनर्घबन्धम् ।
स सत्यसंधस्ततकीर्तिगन्धः सुखी [2]सुखोऽयं परमादिरास्ताम् ॥ ५५ ॥

जीयादजस्रं जिनपाठशालागुरुः पुरुप्रीति[3]चैरुर्गुरुश्रीः ।
भङ्गाप्रकाशी कविरेष काशीनाथः सनाथः प्रततैर्यशोभिः ॥ ५६ ॥

विलसति रघुनाथः पुत्रपङ्क्त्या सनाथः
सकलविबुधगोष्ठीगीतसौजन्यगाथः ।
हृदि कृतरघुनाथः पण्डितव्रातनाथः
स्वकुलजलधिवृद्धौ रोहिणीप्राणनाथः ॥ ५७ ॥

श्रीवागीशसमश्रुतो मखलसच्छागीसुतालम्भन-
क्रीडागीतसुधांशुसुन्दरयशा भागीरथीभावुकः ।
नागीनन्दितयौवनोन्नतिरलं रागी कवीनां कृतौ
भागीलालबुधो विराजतु सदा भागीरमारङ्गभूः ॥ ५८ ॥

अपारपाण्डित्यपयोधिमन्दरं यशश्छटाच्छन्नचतुर्दिगन्तरम् ।
समग्रविद्वज्जनवृन्दकुञ्जरं स्तुवन्ति के नो कवयः पुरंदरम् ॥ ५९ ॥

श्रिया यदीयः सुभगो भृशं करः प्रपन्नदीनद्विजवृन्दशंकरः ।
निरन्तरं पूजितरामशंकरश्चिरं सुखी राजतु रामशंकरः ॥ ६० ॥

यो गीतगीतोपनिषद्रहस्यः प्रतिष्ठितो रामसभोपदेशे ।
वहन्स [11]कस्या अपि पुत्रमंसे श्रीपण्डितो [12]व्यायतनामधेयः ॥ ६१ ॥

---

१. प्रबन्धम्, कामरत्नोदयनामकं सटीकमित्यर्थः. २. परमसुख इत्यर्थः. ३. अधिकप्रीतिचरुस्थालीत्यर्थः. तात्स्थ्यादुपचारात्. ४. अयं द्राविडः तेन जैन इति न भ्रमितव्यम्. ५. कान्यकुब्जः. ६. स्थूलस्रोभिः तेनैतस्याश्वजातित्वं द्योत्यते. ७. अयं च दाधीचः; रामचन्द्रवैदिकात्मजो वेदे शास्त्रे च कृतपरिश्रमः. ८. भा—गी-रमा—. ९. अयमपि कान्यकुब्जः. १०. अयमपि कान्यकुब्जः ११. अज्ञातनामगोत्रतया वक्तुमशक्यायाः. १२. वृन्दारकवृन्दवन्दितचरणारविन्दश्रीगोविन्दपदारविन्दमकरन्दमिलिन्दीभूतमानस—शालिग्रामानुयायिगोपीवल्लभशर्मप्रोक्तविश्वधृक्प्रयोगसमाधानकर्तृसर्वसंमतिसमुल्लसज्ज्योतिर्विन्नीलाम्बरप्रणीतमत्तपददूषणभूषणकरकविवरजगन्नाथकथितदोहापदसमीचीनद्विपथापदोपदेशकर्तृ—मच्छिष्यप्रशिष्यशिष्यतुल्यकामवनवासिपौराणिकमन्दमतिराधेलालकृतप्रश्नपुञ्जसमाधानसमूहकर्तृ—राजराजेन्द्रपूजितचरणारविन्द-

प्रकल्प्य काव्यानि पुरा निजेच्छया ततोऽर्थमारोपयति प्रसह्य य ।
विचित्रवृत्ति' कविसम्प्रदायत प्रणम्यते श्रीमधुसूदनः कवि ॥६२॥
पर प्रजाविघ्नविनाशकर्मठ शिवाङ्घ्रिसेवाप्रथितात्मवैभव ।
सदैवदानार्द्रकरो महामहा गजाननो भाति गजाननो यथा ॥ ६३ ॥

कदापि भुजगै सम तव न सगतिर्निश्चयते
न पर्वतशिलान्तरेष्वपि निवासभूमि श्रुता ।
जडो भवसि नो पर तदपि दीनतापव्यथा-
हर्तौ जगति गीयमे त्वमिह चन्दनश्चन्दन ॥ ६४ ॥
अय जड इति श्रुतिस्त्वयि न जातु सभाव्यते
न कोऽपि घनताडनाजनितसकटो दृश्यते ।
न दीनजनदुर्लभस्तदपि सर्वविद्यावता-
मलकरणभावतस्त्वमसि हीरको हीरक ॥ ६५ ॥
प्रोत्सारी विपदा प्रशस्तकविताधारी प्रहारी द्विप-
त्सहारी कमनीययौवनलसन्नारीविहारी सदा ।
सभारी गुणसपदा खलतिरस्कारी स्मरारिस्मृति
सत्कारी विदुषा मनोभवमनोहारी मुरारिः सखा ॥ ६६ ॥

विदुषि नम्रतर करुणाकर स्वमहसा महता जितभास्कर ।
श्रयति यस्य सदा कमला करद्वयमय स विराजति भास्करः॥६७॥
सर्वाणि गौराणि दिगन्तराणि भाभिर्निजाभी रचयन्समन्तात् ।
बुधै स्तुतो विष्णुपदावलम्बी श्रीभास्करो भास्करवद्विभाति ॥६८॥

---

लब्धप्रतिष्ठरामभजनोक्तिखण्डनकर्तृ—तिङ्सुबन्तान्यतरत्व पदत्वमिति वैयाकरणपण्डित-शिवरामकृतपदलक्षणविचारकर्तृ—जयनगरस्थराजकीयपण्डितोक्ताचारादर्शस्थसस्थास्थ-विनियोगजलत्यागाभावमात्रसपादनकर्तृ—मत्स्यस्थकृष्णशास्त्रि लक्ष्मीनाथमनोरञ्जनकर्तृ—श्री-भागवतादिपुराणेतिहासषट्शास्त्रतात्पर्यानभिज्ञगुप्तनास्तिकवेदान्ताचार्यमतखण्डनकर्तृ—वेदान्तवेद्यब्रह्मपीयूषपानमत्तमूर्तिश्रीधरोक्तिरञ्जनकर्तृ—श्रीगालवाश्रमाचार्याध्यापकपण्डि-तशिवप्रसादशर्मेति प्रसिद्ध १ मैथिलोऽयम २ दाक्षिणात्य एष ३ चन्दनदासोऽय दादूपन्थी छन्दशास्त्रेऽस्य कवे श्रीगुरु ४ हीरजीति प्रसिद्धो यति श्वेताम्बरो जैन ५. दाक्षिणात्य. ६ आकाश भगवच्चरण च

सौन्दर्यनीचीकृतमारमानं शास्त्रोपदेशे गुरुणा समानम् ।
समुज्ज्वलानां यशसां निधानं न श्लाघते क[1]र्ञ्छगनाभिधानम् ॥६९॥
नाडीपरीक्षापरिपक्कपाटवो महोक्षरिङ्गच्छकटीकृताटनः ।
भुजार्जितश्रीर्भिषगुच्यते महानानन्दिलालः स खँडेल[2]वालकः ॥७०॥
श्रीमित्रो[3]दयशोभिनीं स्वमहसा स्फीतां द्वयोः पक्ष[4]यो-
राक्रान्तां तम[5]सा न जातु दिवसेऽप्युच्चैः स्फुरत्कौ[6]मुदीम् ।
पूर्णानन्तकलां कलङ्करहितां मुक्तां क्षयव्यापदा
स[7]द्गोत्राम्बुधिसंभवां द्वि[8]जपतिश्रेणीमिमां संस्तुमः ॥ ७१ ॥
श्रीमद्गौतमगोत्रभूषणमणिः प्रत्यर्थिशङ्कामणि-
र्वामाचारतमिस्रपुष्करमणी रोगार्तचिन्तामणिः ।
पृथ्वीपालकृतादरोऽखिलबुधश्रेणीशिरःशेखरो
ल[9]ल्लूरामभिषग्वरोऽभवदिह प्रध्यातविश्वंभरः ॥ ७२ ॥
योगै[10]रन्वितः सुर[11]सभावनकर्मदक्षः
का[12]व्यादरः पर[13]विभावलयं दधानः ।
पुत्रोऽभवद्गुरु[14]समृद्धिरमुष्य वैद्य-
विद्याचणो जगति कुन्द[15]नरामनामा ॥ ७३ ॥
गुरुप्रसादाधिगतार्थबोधौ वैद्यागमाकुण्ठितधीप्रसारौ ।
**श्रीकृष्णरामो हरिवल्लभश्च** द्वावात्मजौ तस्य कवी अभूताम् ॥७४॥
येनाशिक्षि स[16] जीवनाथगुरुतः काव्यप्रकाशाश[17]य-
श्छन्दश्चन्दनदासतः सगणितं वैद्यागमस्ताततः ।

---

१. अस्य कवेः परमं मित्रं प्रातिवेशी चायं सनाढ्यः. २. ब्राह्मणभेदेषु कस्याश्चिज्जातेर्नामेदम् ३. सूर्यो मित्रं च. ४. मातृपितृपक्षयोः शुक्लकृष्णयोः, पक्षिगरुतोश्च. ५. राहुणा अन्धकारेण च. ६. चन्द्रिका व्याकरणग्रन्थ विशेषश्च. ७. उत्तमवंशजलधिभवां विद्यमानशैलादम्बुधेः संभूतां च. ८. द्विजपङ्क्ति चन्द्रपङ्क्ति पक्षिराजपङ्क्ति चेति त्र्यर्थकमिदम्. ९. एते च कवेरस्य पितामहचरणाः. जात्या भट्टमेवाडा इति प्रसिद्धाः गुर्जरभूमिनिर्जराः. १०. योगो भेषजयोगश्चित्तवृत्तिनिरोधश्च. ११. सुरस–भावने–सुर–सभाया अवने–. १२. कविकर्मादरः शुक्रादभयश्च. १३. उत्कृष्टशोभावलयं शत्रुविभावस्य लयं च. १४. बृहत्समृद्धिर्बृहस्पतिसदृशश्च. १५. **जीवनराम** इत्यप्येषां नामान्तरम्. १६. दुरूहतया प्रसिद्धः. १७. गूढार्थः.

मूर्ते गन्धकजारणावधि कृता येन क्रिया नैकश

सोऽह नूतनकाव्यपञ्चकरूति श्रीकृष्णशर्मा कवि ॥ ७५ ॥

हरिवल्लभकविमल्लो वल्लभरमपि ब्रवीति नो वितथम् ।

अधुना बुधवल्लभता हरिवल्लभता पटुमतल्लो ॥ ७६ ॥

नानालङ्कृति तेन सम्प्रति मया श्रीकृष्णनाम्ना कृत

पञ्चोल्लासमिद जयादिनगरीकाव्य विलासाभिधम् ।

श्रीमत्पूज्यतमैकलिङ्गभगवच्चित्तप्रसत्त्यै तथा

श्रीमन्माधवसिंहवीरनृपतेर्हर्षाय भूयात्तराम् ॥ ७७ ॥

ये पण्डितास्ते कवितानभिज्ञा समुद्यदीर्षा कविताविदो ये ।

तथापि काव्य रचित यतोऽस्मिन्नारायणः स्नेहमुरीकरोति ॥ ७८ ॥

श्रुत्वापि न स्तौति शिर प्रकम्पैर्य कोपि काव्य परम परस्य ।

वय पुन पूरुषमहित त विषाणहीन पशुमेव विद्म ॥ ७९ ॥

अनभिज्ञ समासाद्य कविता गुणवत्तराम् ।

सीदति स्वयमेवाहो रासभ शर्करामिव ॥ ८० ॥

श्रीकृष्णकल्पितामेता श्रीकृष्ण कृतिमुत्तमाम् ।

सत्कारव्यपरीवादादव्यादव्याजतो विभु ॥ ८१ ॥

श्रीमत्कुन्दननन्दनपैद्यश्रीकृष्णरामकविरचिते ।

जयपुरविलासकाव्ये सपूर्ण पञ्चमोल्लास ॥ ५ ॥

॥ समाप्त चेद काव्यम् ॥

॥ शुभ भवतात ॥

---

१ पारदे २ त्रिगुणो वह्न उच्यते ३ हरिवत् बुधवल्लभता पण्डितप्रियत्व देवप्रियत्व च लभताम् ४ परमेश्वर पर्वणीकरोपनामकस्य

॥ श्रीः ॥

# मुक्तकमुक्तावली

इयम्

वैद्यश्रीकृष्णरामकविरचिता ।

पर्वणिकरोपनामकनारायणभट्टकृतशोधा ।

तेन कविनैव कीर्त्यै

श्रुतियुगनन्देन्दुशरदि

१९४४


मुम्बय्याम् ।

निर्णयसागरयन्त्रे राया मुद्रायिता स्वेन ।

सन् १८८७ ईस्वी

॥ श्रीः ॥

अथ

# मुक्तकमुक्तावली प्रारभ्यते ।

॥ श्रीगणेशाय नमः ॥

श्रीकृष्णरामकविना मनीषिगलभूषणाय गुणयोगात् ।
स्वकृतस्फुटपद्याना मुक्तकमुक्तावली क्रियते ॥ १ ॥
भाषासस्कृतसस्कृतो जयपुरीचर्याविचित्रो मया
भाणोऽभाणि वलम्ब्य फाल्गुनकथा य कोऽपि होलोत्सव ।
तस्याप्यत्र विलक्षणानि कतिचित्पद्यान्यवद्योज्झिता-
न्यालिख्य प्रकटीकृतानि विदुषा सतोषपोषेच्छया ॥ २ ॥

## ॥ अथ तत्र देवतास्तवन नाम प्रथमः सरः ॥

लोलत्कर्णयुगानिलविधूतसिन्दूररञ्जिताकाश ।
अलिकोलाहलमुखरितदशदिग्वलयो द्विपानन पायात् ॥ १ ॥
निजभेदकोटिभिरहो तिष्ठन्ती नैकशास्त्रमाक्रम्य ।
गणपङ्क्तिसेविताकृतिरार्या कार्याणि साधयतु ॥ २ ॥
देवत्रयी वा निगमत्रयी वा यस्या स्वरूप गदितु न शक्ता ।
ससारजन्मस्थितिनाशहेतु सा कापि शक्ति कुशल करोतु ॥ ३ ॥
त्रिसध्यमानम्रसुपर्वसुन्दरीसमाजसत्वस्तुतिभि कृपाकरी ।
स्वय त्रयाणा जगता धुरधरी करोतु मा भूरिधन धनुर्धरी ॥ ४ ॥
चलवीचिचयप्रतरत्सुदतीकुचचर्चितचन्दनगन्धवती ।
अमदापुरवप्रसमीपगती रुचिरा दुरित द्यतु साभ्रमती ॥ ५ ॥

---

१ अत्रानुप्रास शब्दस्यायुक्तिरर्थस्यालकारो भाव चनिश्च २ आर्या भगवती छन्दोविशेषश्च ३ इय च कवे श्रीकुलदेवताया अमदाबादनगरसमीपस्थतस्थिते सज्ञा ४. नद्या सज्ञेयम्

सारं निराकारमुदारविक्रमं विकारसंभारविदारणोद्धुरम् ।
संसारनिस्तारविचारपारगं श्रीमार[1]जेतारमपारमाश्रये ॥ ६ ॥

यो ललाटदृशा ददाह कुटिलं कंदर्पकं दर्पतो
यो विश्वस्य चकार किंचिदुदितक्षोभः क्षये द्राक् क्षयम् ।
चित्तान्तश्चतुराननप्रभृतयश्चन्वन्ति यं चिन्मयं
सोऽयं संप्रति संपदे भवतु वः कात्यायनीकामुकः ॥ ७ ॥

आलिङ्गन्गिरिजां स्मितं विरचयन्दग्धं स्मरं शोचय-
न्कल्पान्ते निजरौद्रतां प्रकटयन्मथ्नन्परेषां पुरः ।
भस्माख्याद्भयमामृशन्स्ववै[2]रजं मुण्डस्रजो धारय-
न्मालावन्मुकुटे वहन्सुरधुनीं वः पातु शंभुः प्रभुः ॥ ८ ॥

रै[3]यतरलं हर गरलं गले गतं तव कुतो न दाहाय ।
ज्ञातं मयाऽथवा खलु गङ्गाधर शीतकरमौले ॥ ९ ॥

मृडानीरम्याङ्के महति विहरन्तं शिशुतया
समाच्छिद्याश्नन्तं त्रु[4]टिसुरभिनैवेद्यकवलम् ।
झणत्कारोदञ्चत्कनकरशनालंकृतकटिं
हृदि ध्यायेद्धस्ताकलितवटकं बालवटुकम् ॥ १० ॥

व्रजपरिसरचारी सर्वदा निर्विकारी
कुरुकटकविदारी पार्थकीर्तिप्रसारी ।
त्रिजगदवनकारी गोपनारीविहारी
सुखयतु गिरिधारी मामयं दानवारिः ॥ ११ ॥

ये तव सुरधुनि पूरे स्वभावगौरे निमज्जन्ति ।
ते पुनरधिगत[5]हरिता विहरन्ति मुदा महच्चित्रम् ॥ १२ ॥

अहो गङ्गाभङ्गान्विघटिततटभङ्गान्मृडशिरः-
प्रसङ्गान्प्रोत्तुङ्गान्विशदतररङ्गान्स्मर मुहुः ।

---

१. शंकरम्. २. भयविशेषणम्. भस्मासुराय वरं दत्त्वा शिवोऽपि बिभेति स्मेति पुराणे प्रसिद्धम्. ३. अत्र परिकरोऽलंकार.. ४. एलासुगन्धि. ५. हरिद्वर्णता विष्णुसायुज्यं च. विरोधाभासोऽलंकारः.

अनङ्गार्ताङ्गाना त्वमिह वरवङ्गालसुदृशा

दृशा रङ्गानङ्गेच्छसि मनसि भङ्गारसिक चेत् ॥ १३ ॥

शरज्ज्योत्स्नागौरे तव सलिलपूरे महति ये

नरा मात प्रातः सततमभिषेक विदधति ।

समुत्सार्याशेषा सपदि परिणामे मलिनता

महच्चित्रं तेषा त्वमिह हरिता यद्वितरसि ॥ १४ ॥

उद्दामदारिद्र्यदवाग्निदग्धा ग्रस्ता गदै पातकपाशबद्धा ।

त्वत्तोयपानेन लसन्ति सद्यो मुक्तामया निश्चितमेव गङ्गे ॥ १५ ॥

ये ये पातकिनस्त्वदीयसलिले गङ्गेऽभिषेकोद्यता-

स्तांस्तान्प्रापयसे द्रुत शिवतया सयोज्य रौप्याचलम् ।

पृच्छामो भवती दृपा. कति कति व्याला कतीन्दो कला'

पार्वत्य कति कृत्तय कति कति प्रौढा पिनाकास्त्वयि ॥ १६ ॥

कालिन्दीकूलकेलि. करकृतकमल केशिकसादिकाल

कान्त्या कदर्पकान्त कुटिलकचकल' कुट्टयन्कालियाहिम् ।

कुर्वन्क्रीडाकलाप कुसुमितकदलीकुञ्जकोणे कृपालु

कृष्ण कल्याणकारी कविषु किल कृपा कीर्तनीय करोतु ॥१७॥

कालिन्दीकुचकामुक कमलिनीकोश करे कम्पय-

न्कान्त्या कज्जलकोमल कुरुकुरे क्रूरान्कटाक्षान्किरन् ।

कुर्यात्काव्यकुतूहली कमलया काम्य कलाकोविद

कृष्णाख्य कविताकलङ्कुशलान्कौमोदकीकीलितान् ॥ १८ ॥

गैतवयसामपि मारदमभिसारदमेकमेव सिद्धीनाम् ।

पारदमामयपारदमुदयव्यापारद भजे भिषजाम् ॥ १९ ॥

सुधाकुम्भ हस्ते दधदमरतार्थं सुमनसा

रहस्य जिह्वाग्रे गदहरमथर्वोपनिषदाम् ।

---

१ अङ्ग मो २ मौक्तिकमया, लक्तामया, मुक्ता इति मया निश्चितमिति च क्रमेण त्रिधार्थ ३ ककारादिसर्वपद पद्यमिदमग्रिम च ४ नैषधात्तरे पारदस्तवनम् ५ आयुर्वेदम्

मणिं श्रीवत्साङ्के हृदि जलनिधेर्योऽजनि पुरा
विनिघ्नन्विघ्नं वः सुखयतु स धन्वन्तरिविभुः ॥ २० ॥

काम्यावुदस्तैरमरीसहस्त्रैर्विपत्तमिस्त्रोपरमे सुवस्त्रौ ।
दिगन्तविश्रान्तयशोविमिश्रौ दस्त्रावजस्त्रं कलयेऽघहिंस्त्रौ ॥२१॥

स्फुरत्प्रभामण्डलमोदमानां पुण्यैकलभ्यां दुरितापहन्त्रीम् ।
शूलिप्रियां पर्वतजामपर्णां दिव्यौषधिं[1] कामपि भावयामि ॥ २२ ॥

रुद्रावतार इति यं विबुधाः स्तुवन्ति
दक्षं हि योऽदमयदीश्वरहासदक्षम् ।
पथ्यद्विषो व्यथयति ज्वरनामधेयो
वीरः कृपां मयि करोतु स वीरभद्रः ॥ २३ ॥

सायं नन्दितनन्दिनि स्मररिपो रङ्गप्रसङ्गे मना-
ग्भङ्गाम्भश्चुलुकं निपीय नु मदात्संक्षिप्तशोणेक्षणः ।
चीत्कुर्वन्करमुत्क्षिपन्परिलुठन्दक्षा षडास्यं हस-
न्व्यावल्गन्विवदन्करोतु कुशलं मातङ्गमूर्धा शिशुः ॥ २४ ॥

एकं निद्रितमन्यदद्भुतवचः संफुल्लगल्लं परं
तुर्यं लोहितदृष्टि[2] पञ्चममुमामुद्दिश्य मुग्धास्मितम् ।
इत्थं नैकचरित्रवन्ति विजया[3]व्यासङ्गलोलात्मनः
पञ्चास्यस्य दिशन्तु भूरि भविकं पञ्चापि वक्त्राणि वः ॥ २५ ॥

लीलालोलकुमारकन्दुकहताद्धेरम्बतुण्डाद्द्रुते[4]
भृङ्गाणां पटले पयोरुहधिया वक्त्रोन्मुखं वल्गति ।
कम्पान्दोलितकंकणावलिझणत्कारं किरन्ती करौ
साकूतं शशिशेखरेण हसिता पायादपायादुमा ॥ २६ ॥

अम्बा पृच्छति पाकमादिश गुरो भङ्गापि गङ्गाम्बुभिः
पात्रे तिष्ठति गालिता विजयया[5] नाद्यापि किं चेतसि[6] ।

---

१. समासोक्त्या भगवतीमित्यर्थः. २. लोलितदृष्टीति पाठान्तरम्. ३. मन्त्रशास्त्रप्रसिद्धेयं भङ्गासंज्ञा. ४. प्रोड्डीने. ५. अम्बासख्या. ६. क्रियापदम्.

इत्थ स्कन्दहठोक्तिभिर्दिनमुखे शभोः शनैर्जाग्रत
पान्तु प्रलमदाविलानि विपदा जेत्राणि नेत्राणि व ॥ २७ ॥
भङ्गा कुत्रापि गङ्गासलिलविलुलिता कुत्रचित्सर्पपेटी
कुत्रापि प्रेतचेटी कलयति कुतुकान्मुण्डमाला विशाला ।
उच्चाऽल भस्मजाल क च किरति खुरैर्भीवमुग्धा हसन्ती
सपत्ति प्रेक्ष्य शभोरविभवनमुमा भूरि श वो विधत्ताम् ॥ २८ ॥
गङ्गारिङ्गत्तरङ्गावलिविमलजटाजूटनिस्तन्द्रचन्द्र
पीयूषापूर्णरत्नस्फुरितकलशसन्यस्तहस्तारविन्दम् ।
पौलोमीकान्तचूडामणिरुचिरचमत्कारनीराजिताङ्घ्रि
व्यालोलव्यालमालावलयितवपुष कालिकाकान्तमीडे ॥ २९ ॥
ब्रह्माच्युतेशानविभेदतो य सृष्टिस्थितिध्वसकृते त्रिलोक्या ।
त्रिधात्मरूप प्रकटीकरोति पुन पुनस्त शिरसा नमाम ॥ ३० ॥

## अथ शीतलाष्टकम् ।

अपूपकाञ्जीवटकप्रियायै कुमाररक्षाविधृतव्रतायै ।
उच्चैर्नदद्गर्दभवाहनायै श्रीशीतलायै सतत नमोऽस्तु ॥ ३१ ॥
वशीकृतस्थावरजङ्गमायै भीतेन कालेन नमस्कृतायै ।
विस्फोटकानामधिदेवतायै श्रीशीतलायै० ॥ ३२ ॥
कुरूपहर्त्र्यै वररूपकर्त्र्यै स्वभक्तभर्त्र्यै जगता सवित्र्यै ।
अत्यद्भुतायै प्रियशीतलायै श्रीशीतलायै० ॥ ३३ ॥
भास्वद्गलायै दृशि चञ्चलायै कृपाकुलायै गुणनिर्मलायै ।
प्रभोज्ज्वलायै विलसद्गलायै श्रीशीतलायै० ॥ ३४ ॥
स्तव्याऽतिभव्या विभवेन नव्या दृश्या तपस्या निपुणैर्नमस्या ।
यस्या स्तुतौ कस्य मनो न तस्यै श्रीशीतलायै० ॥ ३५ ॥
दत्तान्यपत्यान्यपि विश्वकर्त्री रुष्टा तु या महरति प्रसह्य ।
प्रत्यक्षदेव्यै त्रिजगत्सु तस्यै श्रीशीतलायै० ॥ ३६ ॥

---

१ अभिप्रायमूढा सभाया मावेषु विलासेषु मुग्धा चेन्दर्थे

विस्फोटकव्याप्तकलेवराणां त्राणाय तापज्वलतां शिशूनाम् ।
परं यदाराधनमेव तस्यै श्रीशीतलायै० ॥ ३७ ॥
सावित्रिकाश्रीगिरिजास्वरूपं धृत्वा स्वयं या विधिविष्णुशंभून् ।
नियोगवश्यान्विदधाति तस्यै श्रीशीतलायै० ॥ ३८ ॥

इति ।

वंशीवादनतत्परः समधिकं गोगोपरक्षाकरः
कालिन्दीतटसंचरस्त्रिभुवनप्रत्यूहकालज्वरः ।
भक्तक्षेमकरः सदा गिरिवरप्रान्ताभिसारादरः
पुष्पापीडधरः स वो नटवरः पायात्कृपासागरः ॥ ३९ ॥
सदा प्रकृतिशीतला परमशुक्लपक्षोदया
परिस्फुरितकौमुदीकवलितान्धकारच्छटा ।
द्विजेन्द्रकुलमण्डली तरुणतापहारिक्रमा
तरङ्गयति कौतुकं कुवलये न केषां दृशः ॥ ४० ॥
क्षमयोच्चतया च यैर्धरा धराधरा जिताः ।
प्रणम्यन्ते बुधास्तेऽमी सभाः सभासभाजिताः ॥ ४१ ॥
श्रीमत्कुन्दननन्दनवैद्यश्रीकृष्णरामरचितायाम् ।
मुक्तकमुक्तावल्यां संपूर्णः प्रथम एष सरः ॥ १ ॥

## ॥ अथ समस्यापूरणं नाम द्वितीयः सरः ॥

समन्तादाक्रान्तेऽध्ययननिलये पण्डितजनैः
समस्याप्रश्ना ये खलु विरचिता रामभजनैः ।

---

१. स्वभावसौम्या. २. कुलीना. शुक्लपक्षे परमोदया. उदयो वृद्धिः. यद्वा. शुक्लप्रतिपदि व्यतीतायामेव सूर्याद्द्वादशांशान्तरालाच्चन्द्रस्योदयो भवति. अतिशुक्लपतत्रोदया च. ३. कौमुदी ग्रन्थविशेषश्चन्द्रिका च. पक्षिपक्षे परिस्फुरणं कौमुदीकवलितान्धकारच्छटायां यस्याः. राजदन्तादिः. ४. विप्रमण्डली चन्द्रमण्डली पक्षिमण्डली च. ५. संहिताविकृतिः, आक्रमणं पादविक्षेपश्च यस्याः. तत्र पक्षिमण्डलीपक्षे 'आलापाश्च शुकालिकोकिलकृता—दाहं निराकुर्वते' इति वैद्यकात्. ६. अत्र क्षमया पृथ्वी. उच्चतया भूभृतो जिताः. ये भायुताः सभासक्ताश्च. ७. पाठशालाध्यक्षैः. पूज्यत्वाद्बहुवचनम्.

अथो पूर्तिं तेषां विरचयति दोषोज्झितपदै
कविः श्रीकृष्णाख्यः स्वगुरुकृपयाऽतीव विशदैः ॥ १ ॥

त्वदीयपाणिपद्मस्था नेत्रकज्जलकान्तिभिः ।
चुम्बिताग्राश्चकोराक्षि 'मुक्ता गुञ्जा भवन्त्यहो' ॥ २ ॥

हन्त नो ग्रस्यसे यावत्कालेन क्रूरकर्मणा ।
तावदेव मतिं मूढ 'श्रीरामभजने कुरु' ॥ ३ ॥

इदमेव कलेरस्य मदविस्फूर्जितं महत् ।
यन्मे मनोरथावाप्तिर् 'न रामभजनादपि' ॥ ४ ॥

'अतिपरिचयादवज्ञा सततगमनादनादरो भवति' ।
लङ्कावासी लोकः कनकमनादृत्य लोहमादत्ते ॥ ५ ॥

परं पतत्पुष्परसाच्छधारापथेन पर्णं स्थगितुं स्वदेहम् ।
बके क्षुधार्तेमथितं सरस्याम् 'त्यक्त्वाऽम्बु मत्स्यो रुरुहुस्तटद्रून्'॥६॥

संत्यज्य तोयानि तरौ विदध्यान्मत्सी स्वकीयां स्थितिमन्वहं चेत् ।
किं तर्हि विद्वन्वद दुर्घटं स्यात् 'सौभाग्यचिह्नं विधवाललाटे' ॥ ७ ॥

कस्तूरिकाचन्दनकुङ्कुमानि सौभाग्यचिह्नानि विलासिनीनाम् ।
प्रयागमृत्स्नातिलकक्रियैव 'सौभाग्यचिह्नं विधवाललाटे' ॥ ८ ॥

यथाभिलाषं परकीयदारै रतं श्रुतं सत्ययुगेऽपि नूनम् ।
अवेहि तल्लक्ष्म कलेः कवे यत् 'सौभाग्यचिह्नं विधवाललाटे' ॥ ९ ॥

न जात्वहो पत्रविशेषकादि सौभाग्यचिह्नं सधवास्त्यजन्ति ।
सखे न कुर्वन्ति कुलप्रसूताः 'सौभाग्यचिह्नं विधवा ललाटे' ॥ १० ॥

प्राप्तौ वसूनां विधिरेव हेतुः परं न विद्या मम बुद्धिरेषा ।
इत्थं न चेत्तर्हि वद त्वमेव 'कुतोऽस्ति विद्वान्सततं दरिद्री' ॥ ११ ॥

सम्प्राप्ततत्त्वः शरदभ्रलोलां लक्ष्मीं जहाति स्वयमेव तुच्छाम् ।
कदापि वाच्यं न सखे त्वयेति 'कुतोऽस्ति विद्वान्सततं दरिद्री'॥१२॥

---

१ इयं समस्या विजयासहृप्रेषिता एवमग्रेऽपि ' ' एतच्चिह्नान्तर्गता सर्वा समस्या बोध्या   २ शफर्या

नारायणस्तोत्रपरः सुशीलः सत्कर्मधर्मप्रवणः कुलीनः ।
सरस्वतीसेवनकृन्न वेद्मि 'कुतोऽस्ति विद्वान्सततं दरिद्री' ॥ १३ ॥
सरस्वतीं ध्यायति मत्सपत्नीमयं सदैवेति रुषेव लक्ष्मीः ।
तत्रानुरागं न तनोति मन्ये 'ततोऽस्ति विद्वान्सततं दरिद्री' ॥ १४ ॥
पात्रे द्विजे स्थापय सर्ववित्तं प्राप्त्यै पुनस्त्वं परलोकमध्ये ।
चिन्ता त्वया नेति कदापि कार्या 'यद्दीयते तन्न लभेत विप्रेच[1]:' ॥ १५ ॥
अलं न शास्त्राण्यपि यं प्रवक्तुं वेदान्तसिद्धान्तमहं वदामि ।
वाक्यं स्मरन्मुक्तिमवाप्स्यतीति 'तत्तथ्यमेवास्ति न चेदिदं स्यात्' ॥ १६॥
कान्ते गृहाण त्वमिदं स्वमालामकारणं किं कलहं करोषि ।
यत्[2]पूर्वपादं मनुषेऽत्र शुद्धं 'तत्तथ्यमेवास्ति न चेदिदं स्यात्' ॥ १७ ॥
चन्द्रे कलङ्कं समुदीक्ष्य कान्तावियोगिनां प्रज्वलितेन्द्रियाणाम् ।
इतीव तर्को भवति प्रसह्य 'भात्यन्धकारो दिननाथबिम्बे' ॥ १८ ॥
गुरोरवज्ञां प्रविधाय गर्वादतीव दुर्बोधगभीरभावम् ।
काव्यं मुखश्रीजितपूर्णचन्द्रचक्षुः 'चन्द्रे कथं पश्यसि दुर्घटाख्यम्' ॥ १९ ॥
उच्चैस्तरां मत्सरिणोऽपि लोकाः कुर्वन्ति संसत्सु पुरः प्रशंसाम् ।
न पण्डितैर्विश्वसितव्यमत्र 'तत्सौहृदं यत्क्रियते परोक्षम्' ॥ २० ॥
शृण्वन्तिकं पान्थकुलानि सायं स्यात्किं कृधातोर्लिटि रूपमाद्यम् ।
को विष्णुना ग्राहमुखादमोचि 'शृगालशब्दं कुरुते करीन्द्रः' ॥ २१॥
'कान्ताननं वा निशि चन्द्रबिम्बं' सखे समानं न भवेत्तथाहि ।
निर्विघ्नमाभाति सदैव पूर्वं वार्तापि नान्त्यस्य तु कृष्णपक्षे ॥ २२ ॥
'कान्ताननं वा निशि चन्द्रबिम्बं' ब्रूयात्कथं मत्सदृशः समानम् ।
एकेन केशच्छलतस्तमोऽपि पश्चात्कृतं चान्यदतो बिभेति ॥ २३ ॥
'कान्ताननं वा निशि चन्द्रबिम्बं' न तुल्यतामेति कदाचिदेतत् ।
धत्ते यदाद्यं सुमुदं जनानां जहाति चान्यत्कुमुदं कदापि ॥ २४ ॥
अहं न जाने किमिदं चकास्ति 'कान्ताननं वा निशि चन्द्रबिम्बम्' ।
अयं किमन्तस्तिलकः कलङ्कः किंवा स्मितश्रीरुत चन्द्रिकेयम् ॥२५॥

१. विप्रेभ्यः. २. प्रथमपादम्.

'कान्तानन वा निशि चन्द्रबिम्ब' सुधाधरत्वेन गत प्रसिद्धिम्[1] ।
इति ब्रुवाणा कवयो निरस्ता निरङ्कसाङ्कत्वगुणानभिज्ञा ॥ २६ ॥

श्रिया मनोज्ञ कठिनाकृतीनामपि द्रुत द्रावकमेकमेव ।
'कान्तानन वा निशि चन्द्रबिम्ब' न कस्य पुंसो मुदमादधाति ॥ २७ ॥

निन्दन्तु मा केऽप्यथना स्तुवन्तु तथाप्यह तत्थ्यमुदीरयामि ।
'कान्तानन वा निशि चन्द्रबिम्बे' जडात्मकस्यैव तनोति हर्षम् ॥२८॥

पद्मानि सकोचयति प्रसह्य कामोदय दर्शनत करोति ।
ज्योत्स्ना दधाति द्वयमेव लोके 'कान्तानन वा निशि चन्द्रबिम्बम्' ॥२९॥

पद्मोपम किं किमथो विकल्पे कस्या तमश्श्वसिति चक्रवाकान् ।
किं दृष्टि ताप हरते नृणा किं 'कान्तानन वा निशि चन्द्रबिम्बम्'॥३०॥

एकेन केनापि गुणेन नीचोऽप्युच्चै प्रतिष्ठा लभते जगत्सु ।
दृष्टान्तमत्रै मृदुताप्रसिद्धो 'दोषाकरोऽप्युच्चपद प्रपन्न'[2] ॥ ३१ ॥

पतिव्रतानामिह रीतिरेषा स्वस्वामिनो यद्गतिमाप्नुवन्ति ।
'नाथे निशाया नियतेर्नियोगादस्त गते हन्त निशाऽपि याता' ॥ ३२ ॥

'नाथे निशाया नियतेर्नियोगादस्त गते हन्त निशा गतापि' ।
एषा पुनश्चन्द्रमस न लेभे क्वापि प्रियास्विर्न हि तामनीनाम् ॥ ३३ ॥

राज्याधिकारा जलवीचिचञ्चला 'भवन्तु किं तैर्मम बुद्धिशालिन' ।
तडित्कदम्बेन गत गते घने 'किं तेन हानिर्गगनस्य जायते' ॥ ३४ ॥

कार्पण्यमुद्वीक्ष्य विधु कदाचित् बुधा यदाहुर्मम सम्मन न तत् ।
जाने निनाङ्के दयिनाऽस्य वर्तते 'निशीथिनीनाथकलङ्किता न हि' ॥ ३५ ॥

मित्राद्वियोज्याभिनुनोनि पद्मिनीं स्वीत्वेऽपि तुल्ये कलुषा निशीथिनी ।
योग्या तत्रैव कलङ्किता पर 'निशीथिनीनाथकलङ्किता न हि' ॥ ३६ ॥

व्यनक्ति य. स्त्रीविभवेऽपि वैभव त जात्ममेव प्रवदन्ति कोविदा ।
अस्माकमित्युक्तिमता कथ मता 'निशीथिनीनाथकलङ्किता न हि' ॥ ३७ ॥

---

१ सुधासमानाधरत्वेन तत्समाकारेण च २ स्वर्गोरभेदाज्जलाशयस्य समुद्रस्य ज्यामस्य मूर्धन्य विष्णु तु 'इन्द्रनाणीन्द्रियाणु' इत्यादिगीतोक्तेन हृष्टर्षी

तत्तथ्यमेवास्ति बुधा वदन्ति यत् 'निशीथिनीनाथकलङ्किता न हि' ।
श्यामां निजाङ्के वहति प्रियामयं तत्कार्ष्ण्यमेतत्सितधाम्नि राजते ॥ ३८ ॥

लड्डुकैर्द्विजकुलमद्य भोजयित्वा
प्रत्येकं तदनु सुवर्णमर्पयित्वा ।
वीटीं[1] यन्नृप न ददासि तत्त्वयोग्यं
'विक्रीते करिणि किमङ्कुशे विवादः' ॥ ३९ ॥

दृष्टं दृशः सुखयति च्छविचक्षदच्छं
वैरायते सरसिजेन सुधाधरं यत् ।
क्लान्तं कदा शिशिरयिष्यति मां सखे तत्
'कान्ताननं स्मरसि किं न हि चन्द्रबिम्बम्' ॥ ४० ॥

ज्योत्स्नाचमत्कृतिविचित्रमनङ्गरङ्गं
भङ्गं करोति कमलस्य सुधाप्रसङ्गम् ।
क्लान्तं कदा शिशिरयिष्यति मां सखे तत्
'कान्ताननं कलयसे न हि चन्द्रबिम्बम्' ॥ ४१ ॥

संक्रुद्धदाशरथिसंधितबाणनिर्य-
त्कल्पानलोत्कटकठोरशिखासहस्रैः ।
तापार्दिताः समधिकं क्वथितानि सिन्धोस्
'त्यक्त्वा पयांसि तटमारुरुहुः शफर्यः' ॥ ४२ ॥

अतिशिशिरसमीरप्रौढवेगप्रगल्भे
प्रबलतमहिमर्तौ दुःखदे प्रोषितानाम् ।
इह कथमपि नित्यस्नानहेतोः प्रभाते
'निविशति जलमध्ये शीतभीता मृगाक्षी' ॥ ४३ ॥

इतो गङ्गाभङ्गा घटिततटभङ्गाः पुनरितो
दवज्वालाजालाज्वलिततरुमाला वनभुवः ।
सरंहाः सिंहोऽग्रे ध्वनति मम हंहो नहि गति-
र्विना दैवं देवं 'हरिणशिशुरेवं प्रलपति' ॥ ४४ ॥

1. लघुताम्बूलम्.

'न जानीम कस्मात्कमलवनवैरी हिमकर'
कवे कस्याप्येतद्वचनमतिसदिग्धमनस ।
न कैरत्र ज्ञात कथय कविताविद्भिरनयो
प्रियावक्त्रौपम्यद्रविणकलहो भूमिवलये ॥ ४५ ॥
श्मशानेष्वावासो वसनमिभचर्मैव जरठो
वृषो वाहो भस्म द्रविणमनुगा भूतनिवहा ।
तथाप्येक. शभुस्त्रिभुवनमिद रक्षति सदा
'क्रियासिद्धि सत्त्वे वसति महता नोपकरणे' ॥ ४६ ॥
कदा गण्डोदञ्चन्मदलुलितसिन्दूरसुभग
नमस्कुर्वन्पद्मामलमधुरमूर्तिं गणपतिम् ।
गजास्य श्रीशभो सुत सुमुख लम्बोदर विभो
'प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान्' ॥ ४७ ॥
कदा सम्यग्ध्यायन्ननुपमचरित्र मणिगण-
स्फुरद्भूषाचित्र पुररिपुकलत्र किमपि तत् ।
शिवे दुर्गे कात्यायनि जननि भक्तप्रणयिनि
'प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान्' ॥ ४८ ॥
कदा पुण्यक्षेत्रे करकलितरुद्राक्षवलयो
दधत्स्वान्ते शान्तेऽखिलशिवपद श्रीशिवपदम् ।
महेश श्रीकण्ठ स्मरहर हर त्र्यम्बक शिव
'प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान्' ॥ ४९ ॥
कदा ब्रह्मेशानत्रिदशपतिमुख्यै सुरगणै
स्तुत विष्वक्सेनं जितदनुजसेन हृदि भजन् ।
अये विष्णो जिष्णो गरुडरथ विश्वभर हरे
'प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान्' ॥ ५० ॥
कदा श्रीमत्पङ्केरुहवनविकाशिप्रसमर-
प्रभापुञ्ज तेज किमपि कठयन्नौपनिषदम् ।

ग्रहेश श्रीभानो मिहिर तरणे सूर्य सवितः
'प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान्' ॥ ९१ ॥
कदा कार्योद्योगं सकलमपि संन्यस्य सहसा
स्मरन्नित्यं शान्तं हृदयवचनागोचरमहः ।
विभो मायातीत प्रथम परमानन्दनिविड
'प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान्' ॥ ९२ ॥
कदा तस्याः क्रीडाकलहकुपिताया मृगदृशो
लसल्लाक्षारागं पदकमलमालम्ब्य शिरसा ।
प्रिये लीलालोले नलिननयने मानिनि मयि
'प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान्' ॥ ९३ ॥
[विद्वद्भिः[1] कृततापने दिनकरे मित्रत्वमावेद्यते
वन्हिः सर्वभुगप्ययं भुवि बृहद्भानुर्यदाख्यायते ।
शंभुः पीतविषः श्मशानवसतिर्मृत्युंजयः कथ्यते
भिन्दन्गाढतमो जनैकसुखकृच्चन्द्रः कलङ्की कथम्]
उ[2]ष्णांशोरपि मङ्गलं विदधतो मित्रत्वमन्वर्थकं
यत्तेजस्विनि पावकेऽखिलभुजि स्[3]थाने बृहद्भानुता ।
शंभुः पीतविषोऽप्युमाधरसुधामास्वाद्य मृत्युंजय-
श्चन्द्रस्यापि कलङ्किता गुरुवधूमालिङ्गतो युज्यते ॥ ९४ ॥
सोऽ[4]साध्यः परिकीर्तितोऽतिसृतिमान्यस्यातिसार्येत वि-
ण्नीलाभाऽधिकनिर्मला प्रविलसत्सौरभ्यसंभारयुक् ।
अन्तर्दुष्टितयाऽतिविस्नमलिना बद्धा शिरातन्तुभिर्
'जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत्' ॥ ९५ ॥
आ[5]श्चर्यं कथयामि कस्य पुरतः कुर्वे किमेमि क्व वा
काचित्काञ्चनवल्लरी गृहशिरोरूढा समुज्जृम्भते ।

१. अयं श्लोक आनन्दनन्दनोपदेशामृतघटीकर्तुः पण्डितगोपिनाथस्य प्रश्नरूपः. २. अयं श्लोकः पूर्वश्लोकस्योत्तररूपः. ३. युक्ता. ४. इयं समस्यापूर्तिः कविना स्वस्याधीतमाधवनिदानादिसकलायुर्वेदत्वबोधनाय कृता. ५. अत्र रूपकातिशयोक्तिः.

अस्या किंच सखे दधन्ति सुषमा नारङ्गबिम्बोपमा
'दृष्ट्वा पक्वफलानि मे मृदु मनो मोह समापद्यते' ॥ ९६ ॥
यान्याघ्राय ममार मृत्युविजयी भीष्म स भीष्मायुधो
द्रोणो द्रोहमयाग्निजायुपि यमाभ्यर्णं स कर्णोऽप्यगात् ।
तान्येतानि नृप त्वदीयकुनयक्ष्वेडद्रुमस्य ध्रुव
'दृष्ट्वा पक्वफलानि मे मृदुमनो मोह समापद्यते' ॥ ९७ ॥
का निन्द्या, कुलवर्धक क उदित, को ब्रूहि जीवन्मृत,
क दृष्ट्वा कुमुद प्रहृष्यति, लिपि स्यात्कि नु रूप दृशो ।
सम्बोध्यो हरिरुद्धुरा जगति का, कस्या स्वपित्यम्बुज
'वन्ध्या-सूनुरलोचन' एष्युविधु पश्यत्व-माया निशि' ॥ ९८ ॥
प्राप्य प्राग्विद्रुमत्व त्वदधरविलसत्कान्तिपूरेण नासा-
'मुक्ता गुञ्जा भवन्ति' प्रचलकुवलयस्पर्धिभिस्त्वत्कटाक्षै. ।
भूयोऽप्येतास्त्वदीयस्मितनवलरुचा सभविष्यन्ति मुक्ता
लोके दृष्टा विचित्रा रुचिरमुखि मया शक्तिरेषा तवैव ॥ ९९ ॥
श्रीमत्कुन्दननन्दनवैद्यश्रीकृष्णरामरचितायाम् ।
मुक्तकमुक्तावल्या द्वितीयसर एष सपूर्ण ॥ २ ॥

---

॥ अथोद्दीपनवर्णन नाम तृतीयः सरः ॥

तत्रादौ वसन्तस्य ।

किंशुककुसुमवक्रनखो मदनप्रल्हादपक्षपातपर ।
मानवतीमानदितिजमिच्छति हन्तु वसन्तनरसिंह ॥ १ ॥
प्रसह्य चम्पको भृङ्गान्निष्कामयति दूरत ।
समुन्नतो हि ससर्गं मधुपै. कोऽभिनन्दति ॥ २ ॥

---

१ द्वितीयाबहुवचनान्त पक्वफलविशेषणम् ना नपुसकेति नुम् २ इय समस्या राजगुरुश्रीनारायणभट्टै कृता ३ 'मारविजयी' इति पाठ इति रङ्गनाथशास्त्री ४ वैचित्र्यम्, मा—ऊदम् ५ हरिर्विष्णुस्त्वया सबोधनीय इति प्रश्न ६ उत्कटा मारक्षमा इति भाव ७ समस्याया त्वेकपद समाधान भिन्नपदत्वमत्रोद्दरा । एवमेव 'अ–माया' इत्यत्रापि ८ आनन्दो धलिपिता च ९ मधुपैर्भ्रमरैश्च

याचकाय मधवे तरुदानी दत्तवान्किसलयान्यखिलानि ।
तेन नूतनदलैः सहितोऽभून्निष्फलं भवति जातु न दत्तम् ॥ ३ ॥

आज्ञां मन्मथचक्रवर्तिनृपतेरादाय निःशङ्कधी-
र्भ्राम्यद्भृङ्गमहा[1]जनान्पिकगिरा साकूतमाकारयन् ।
कुञ्जाट्टे च्युतपत्रसंस्तरवति श्रीमान्वसन्ताभिधो
व्यापारी सुमनोमरन्दवसुभिर्वाणिज्यमालम्बते ॥ ४ ॥

अस्मिन्वसन्ते न नराः सहन्ते वधूवियोगं च बलासरोगम् ।
कुरङ्गनाभिद्रवलेपभाभिर्भजन्तु दृप्ताः प्रमदाः प्रलिप्ताः ॥ ५ ॥

अथ ग्रीष्मस्य ।

परमप्रतापशाली माधव[2]संपादितोत्कर्षः ।
ललना[3]लिङ्गनविमुखो ग्रीष्मोऽयं भी[4]ष्मतां धत्ते ॥ ६ ॥

अथ वर्षाणाम् ।

सरसा[5]शया तडिद्गुणगौरा परिवेष्टिताम्[6]बरोत्कर्षा ।
उद्गतपयो[7]धरश्रीर्मुग्धवधूरिव विभाति घनवेला ॥ ७ ॥

चञ्चलविद्युद्वलया विरचितघन[8]कृत्तिपात्रजलसेका ।
प्रावृड्जकी परितः प्रक्षालनमम्बरस्य विदधाति ॥ ८ ॥

नृपतेरहो महोभिः प्रायः पीतानि नाकनीराणि ।
नो चेत्प्रजल्[9]प जलदाः प्रागिव वर्षासु किं न वर्षन्ति ॥ ९ ॥

नेमाः सीमन्तिन्यः सौदामन्यः पयोदमालायाः ।
निर्गत्य सौधलग्ना विलसन्ति [10]महे न[11]भस्तृतीयायाः ॥ १० ॥

अ[12]त्यन्तकामाकुलसर्वरामा लोकस्य लक्ष्या घृ[13]तपूरभक्ष्या ।
एषा सखि श्रावणजा विमिश्रा हर्षैर्द्वितीया[14] ध्रुवम[15]द्वितीया ॥ ११ ॥

---

१. वैश्यान्. २. वैशाखः श्रीकृष्णश्च. ३. ग्रीष्मे तदालिङ्गनं निषिद्धं वैद्यके । भीष्मेण तत्प्रतिज्ञातम्. ४. तैक्ष्ण्यं देवव्रतत्व च. ५. सजलगर्भा अनुरागवती च. ६. वस्त्रमाकाशं च. ७. कुचौ मेघाश्च. ८. 'मसक' इति प्र. ९. अत्र मित्रं संबोध्यम्. १० उत्सवे. ११. श्रावणशुक्लतृतीयायाः । तस्यां स्वर्णगौर्याः स्त्रीप्रधानउत्सवो देशविशेषे भवति. १२. बहुव्रीहिसमासः. १३. घृतपूराः 'घीवर' इति प्र. १४. श्रावणशुक्लद्वितीया शृङ्गा-रद्वितीयेति प्र. १५. अनुपमा.

जीमूतमालाग्रथितैकजाला विद्युद्दिशाग्र स्मरमत्तबालाः।
हसप्रधर्षा कुललोकहर्षा सतापधर्षा सखि भान्ति वर्षा.॥१२॥

काप्यङ्गी रङ्गैपङ्क्त्याऽरुणयति रमणी भूषणैर्भाति काचि-
द्गायत्यन्या परापि प्रलसति लहेरीलक्ष्म वासो वसाना।
यत्रान्या स्नेहपूरान्वितरति च मुद याति दोलाभिरन्या
सा शृङ्गाराद्वितीया रचयति न मन कस्य शृङ्गारमग्रम्॥ १३॥

आकाशे पश्य नेमा निविडघनघटा सभृताग्नेयैचूर्णा
मञ्जूषा भान्ति तासामुपरि सुरधनु कैतवात्केतवोऽमी।
विद्युन्नो नालैयन्त्रश्रुतिमुखनिपतद्दीप्तवर्तिप्रकाश
सैन्य मारस्य मन्ये स्फुरति विमथितु मानिनीमानदुर्गम्॥ १४॥

पाप केऽपि जगुर्निदानमनिल प्राहु परे नैर्ऋत
नक्षत्र कतिचिज्जजल्पुरितरे दुर्दैवमूचुर्नृणाम्।
यत्तु प्रावृषि वैपरीत्यमधुना लोके समुज्जृम्भते
तत्सुप्ते जगदीश्वरे जलमुचामन्याय उन्नीयते॥ १५॥

॥ अथ शारदः॥

५ शैरसामर्थ्यं शरदि स्मरवीरस्योर्जित पश्य।
अप्याजगाम सोऽय कन्या भोक्तु त्विषां नाथ॥ १६॥

गोधूमसर्पिर्यवमुद्गधान्य रक्तस्रुती रेचनमस्ति मान्यम्।
हँसोदक तिक्तकषायमिष्ट वनान्तकाले लघु दुग्धमिष्टम्॥ १७॥

वधूनयननिर्जित मधुपकैतवान्नीरज
शिर्वाक्षवलय दधन्मुखरित तदुद्गुञ्जितै।
विधाय तपसि स्थिति वनेनिवासि पीतातप
जयाय जपति ध्रुव कमपि मन्दमन्द मर्नुम्॥ १८॥

---

१ 'मेहदी' इति प्रसिद्धया २ लहरीणा लक्ष्म यस्मिन्तत् 'लहर्यो' इति प्रसिद्धम् ३ आग्नेयचूर्णं 'दारूद' इति प्रसिद्धम् ४ नलयन्त्राणि वह्नियन्त्राणि ५ इयमार्या प्राचीनपद्यस्य च्छायाभूता ६ 'कुम्भस्थ किरण कठोरमहस सततमंदि क्षपाप्राणेशस्य करैर्हिम निशि जल जायेत हसोदकम्' इति त्रिमल्लोक्तम् ६ रुद्राक्षमालाम् ७ वन-जन्मरण्य च ८ मन्त्रम्

नारीनयननिराकृतमम्बुजमम्भसि निमज्जति त्रपया ।
मधुलुब्धाः पुनरलयः करुणं क्रन्दन्ति गुञ्जितव्याजात् ॥१९॥
स्त्रीमुखकमलेन बलाद्विलुलितकमलं सखे कमलम् ।
अश्रूणि मुञ्चति रयादमन्दमकरन्दकैतवतः ॥ २० ॥
विधुवदनावदनजितं प्रबोधितमपि प्रसह्य मित्रेण ।
विचिनोति कवलनार्थं पद्ममलिच्छद्मतो गरलम् ॥ २१ ॥
मधुभाविताशयानां सत्यपमानेऽपि नैव निर्वेदः ।
जीवनरुचि पश्याब्जं न्यक्कृतमपि नागरीनयनैः ॥ २२ ॥

॥ अथ हेमन्तस्य ॥

भ्रमति हिमानीसैन्ये विमुक्तदैन्ये जिगीषया जगतः ।
भयविह्वलमौष्ण्यमिदं तरुणीस्तनदुर्गमाश्रयति ॥ २३ ॥
हेमन्तकालेऽत्र वियोगिकाले शीतस्य रुक् पश्य न तस्य यस्य ।
अङ्के हसन्ती दयिता हसन्ती पार्श्वे हसन्ती वसनानि सन्ति ॥ २४ ॥
यो धातुमश्नाति सकृद्धिमर्तौ तं नैव शीतं व्यथते कदापि ।
गृण्हन्ति याः प्रत्यहमेव धातुं स्त्रीणां कुतः स्याद्बत शीतबाधा ॥ २५ ॥

॥ अथ शिशिरस्य ॥

परमप्रमदा प्रमदा भ्रमरी भ्रमरीतिकोविदा विपिने ।
पवनो विभाति जवनो मदनः शिशिरे वियोगिनां कदनः ॥ २६ ॥

॥ अथ प्रभातस्य ॥

निपीय बहु वारुणीं जलनिधौ स्खलन्तं क्षणा-
दमुं विगलितांशुकं द्विजपतिं विलोक्य ध्रुवम् ।
इयं प्रियतमा हरेर्दिगरुणोदयस्य च्छला-
त्कुसुम्भवसनाञ्चलैः स्वमुखमावृणोति ह्रिया ॥ २७ ॥

---

१. तिरस्कृतलक्ष्मि. २. सुहृदा सूर्येण च. ३. आयूरुचि जलरुचि च. ४. विरहिणामन्तके. ५ हास्यकर्त्री. ६. देदीप्यमाना. ७. अङ्गारधानिका. ८. परमप्रीतयः. ९. पश्चिमां दिशं मदिरां च. १०. गलितकिरणं गलितवस्त्रं च. ११. चन्द्र विप्रराजं च. १२. ऐन्द्री दिक्.

निशाविरहदुःखेन दून किल निशापति ।
अस्ताचल ममारुह्य समुद्रे मङ्क्तुमिच्छति ॥ २८ ॥
ज्वालयति कालयज्वा पूर्वशिखरिशिखरवेदिकामध्ये ।
वैश्वानरमादित्यव्याजात्सोमांशुहोमाय ॥ २९ ॥
पौरस्त्यशृङ्गिशृङ्गोन्मिषितमिहिरम्बिम्बमेतदाभाति ।
शिवलिङ्गप्रत्यर्पितजपाकुसुमगुच्छविच्छित्ति ॥ ३० ॥
नीहारसारशिशिरे प्रथमाद्रिसानौ
　　शीतार्दितैरुषसि सकलिता किरातै ।
अङ्गारराशिविलसद्दलया हसन्ती
　　हहो समुज्ज्वलति भास्करबिम्बदम्भात् ॥ ३१ ॥
चक्राङ्गनाचक्रमहोत्सवेऽधुना दिशो हरेरम्बररागहेतवे ।
पूर्वाचलप्रस्थकटाहसभृतश्चकास्ति काश्मीरजकल्करुग्रवि ॥ ३२ ॥
नक्षत्रपुष्पैर्विधिनाऽर्चितस्य तमिस्रधूपेन विधूपितस्य ।
दिनश्रिया व्योमहरे पुरस्तात्प्रबोधित सूर्यमिपात्प्रदीप ॥ ३३ ॥
जगत्रयीमोहवहोऽयमित्थ प्रत्यूषपुसा मथितस्य रोषात् ।
तमिस्रसर्पस्य मणिर्विभाति बालार्कदम्भादुदयाद्रिशृङ्गे ॥ ३४ ॥

॥ अथ मध्याह्नस्य ॥

एष तपति चतुरस्र तीक्ष्णांशुरतिप्रवृद्धतीक्ष्णांशु ।
आकाशसीम्नि चिह्नी प्रसह्य सूते यदण्डानि ॥ ३५ ॥

अथापराह्नस्य ।

ज्योतिषि सरोजसुहृदि क्रमेण किल जीर्णभावमनुभवति ।
तरुतललीना छाया जनतेव विहर्तुमुद्युक्ता ॥ ३६ ॥

अथ सायंकालस्य ।

रागाकुले परा प्राप्य जाते दिवसभर्तरि ।
शोकादिव तमोग्रस्ता पूर्वेषा लक्ष्यते दिशा ॥ ३७ ॥

---

१ चन्द्रकिरणाना वर्णविशेषाशाना च २ नक्षमाकाशश्च ३ लोकप्रसिद्धिमाश्रित्य वर्णनमिदम् ४ सूर्य

उदयाद्रेरुड्डीनो दिनं भ्रमित्वा पतङ्गोऽयम् ।
अद्य प्रदोपसमये वडवाज्वलने जुहाव निजदेहम् ॥ ३८ ॥

उड्डायितः पूर्वदिशा क्रमेण प्रकाशरङ्गः पृथुलः पतङ्गः ।
परेवियद्विच्युतरश्मिरर्वाक्पतन्निदानीं क्षपितोऽस्तशैले ॥ ३९ ॥

यो वासवस्य ककुभा कमनीयरङ्गः
प्रोड्डायितः सकललोकमुदे पतङ्गः ।
दैवादहो त्रुटितरश्मिमधः पतन्तं
परेवियत्तमपरा परिलुण्ठतीव ॥ ४० ॥

लोभपरयेव परया पतङ्गमुल्लुण्ठितं विलोक्य सखे ।
चन्द्रमिषात्पुनरन्यं पूर्वा प्रोड्डाययत्येषा ॥ ४१ ॥

जम्भारेः प्रियया कयाऽपि ककुभा पूर्वाचलप्रान्ततः
श्रीमान्प्रौढपतङ्गको वियति यः प्रातः समुड्डायितः ।
आः सोऽयं च्युतरश्मिबन्धलुलितः परेनभो न्यक्पत-
न्संप्रत्युत्क्षपितोऽस्तपर्वतदरीदीर्घद्रुशाखान्तरे ॥ ४२ ॥

आकाशभ्रमिखिन्नभास्करहयप्रोद्वान्तफेनच्छटा-
विच्छिन्नस्तबका इवाम्बरतलश्रीहारमुक्ता इव ।
संध्यानृत्यनटोन्नतोज्ज्वलजटाजूटज्वलज्जाह्नवी-
धाराप्रोच्छलदम्बुबिन्दव इव स्फूर्जन्ति तारा इमाः ॥ ४३ ॥

निबिडतमतमस्तोमस्तिमिततमिस्राविमिश्रवेलायाम् ।
अम्बरवाटीकुसुमाकारास्तारा विभान्ति सस्फाराः ॥ ४४ ॥

रात्रिर्भवित्री बहुदुःखदात्री दीर्घा ननु प्रोषितभर्तृकाणाम् ।
इतीव निश्चित्य मनस्यशेषाऽप्येषा त्रियामा विहिता विधात्रा ॥ ४५ ॥

श्रीमत्कुन्दननन्दनवैद्यश्रीकृष्णरामरचितायाम् ।
मुक्तकमुक्तावल्यां तृतीयसर एष संपूर्णः ॥ ३ ॥

---

१. सूर्यः शलभश्च. २. सूर्यः लोकेषु पत्रनिर्मितः पतङ्गशब्दप्रसिद्धः क्रीडनकविशेषश्च. ३. किरणप्रग्रहौ रश्मी. ४. नष्टः. ५. पश्चिमा.

## ॥ अथ शृङ्गारवर्णनं नाम चतुर्थः सरः ॥

सफुल्लामलनीलकञ्जविलसल्लालित्यलीलालसा-
श्चञ्चत्खञ्जनमञ्जुलच्छविमुषः कन्दर्पदर्पोद्धुराः ।
पीयूषस्नपिता इवाच्छमधुरस्निग्धास्त्रपालङ्कृता
भूयो भावभृता भवन्तु भवतां कान्ताकटाक्षच्छटाः ॥ १ ॥

शृङ्गाररङ्गशाला भव्याभरणा नितम्बविस्तारा ।
रतिरिव परिस्फुरन्ती हरति न बाला मनः कस्य ॥ २ ॥

हेतिरिव होलिकाया विद्युदिव द्योतमानदेहश्रीः ।
शारदपार्वणचन्द्र निदार्य निष्कासितेव सा सुतनुः ॥ ३ ॥

श्रुत्वा प्रसवक्लेशं गुरुजनमुखतोऽङ्गभङ्गकरम् ।
रतिभयचकिता मुग्धा प्रियनिकटे नैति शयनार्थम् ॥ ४ ॥

युवतिमतितुन्दिला स्मरसमरे समियाय तुन्दिलश्चुम्बन् ।
एकत्र लगन्परतो विगलन्करतालिकालीलाम् ॥ ५ ॥

अच्छे यमुनाकच्छे गतमालि मया पयः समानेतुम् ।
केनापि तत्र हरिणा रदैः क्षता पुनरहं न परिभुक्ता ॥ ६ ॥

सखि रोमराजिराजितपरिवेषा तव गभीरनाभिरियम् ।
ललितलतावलिवलयितसरसीव रसं ददाति रसिकेभ्यः ॥ ७ ॥

निलयाद्दिनि सरन्ती प्रियकरमुत्क्षिप्य वेगतो बाला ।
उर्वरितेव कुरङ्गी प्रपतीत्फालात्परं श्वमिति ॥ ८ ॥

नयनं प्रसारयन्ती साञ्जनलोहितनखाग्रयाऽङ्गुल्या ।
सा भाति मञ्जुमुक्ता समर्पयन्तीव खञ्जरीटाय ॥ ९ ॥

नाभिर्वापी त्रिवलि सोपानं रोमराजिरिन्द्रमणिः ।
ललिताङ्गि तवोच्चकुचौ मदनशिखरबन्धमन्दिराभासौ ॥ १० ॥

---

१ एतेन 'पातु वो दयितामुखम्' इतिवत्कान्ताकटाक्षच्छटा सदा युष्माकं समुच्योऽनुकूला इति यावद्दूपजनते २ हेतिर्ज्वाला ३ करतालिका वाद्यविशेषः तस्या लीला सादृश्यं समियाय प्राप्त ४ मार्गे रुक् ५ सिंहेन कृष्णेन वा ६ भक्षितालिङ्गिता वा इत्यसुरतगोपनेयम् ७ पृथक्क्षिप्तलाम्ब्य पशुविशेषः ८ शिखरबन्धमन्दिरे शिखराकारौ प्रासादौ

कृपणेति विविच्य वधूर्यतिसत्काराय योजिता गुरुभिः ।
अथ तद्यौवनलुब्धाः पौरा अपि संदधुर्मुदा यतिताम् ॥ ११ ॥

लोहितलेखावलयितलोचनयुगलं विभाति ललनायाः ।
स्मरदाशेन मुखसरसि झषयुगमरुणगुणजालबद्धमिव ॥ १२ ॥

तव वदनविधुसमृद्धिं विधिर्विधुमधारयन्तमालोच्य ।
दर्शयितुमात्मशिल्पं खण्डयति मुहुः क्रमेण मण्डयति ॥ १३ ॥

विज्ञप्तोऽपि वराको वितरति किमपि क्वचिद्यथाशक्ति ।
अतनुसमृद्धिसमर्था तनुमात्रं न त्वमर्पयसि ॥ १४ ॥

नागिन्य इव विलास्याकलनकलाकोविदाः सततम् ।
ददति मुदमप्सरस इव सुरतोषितचित्तवृत्तयो वेश्याः ॥ १५ ॥

विजनेऽपि मन्दिरे सखि रतकेलिः कीरचन्द्रिरे निभृतम् ।
भवति प्रगल्भयोरपि चाटुविनोदं विना यूनोः ॥ १६ ॥

पृच्छति काचित्सरला दुग्धं पीतं किमद्य मद्दयित ।
नहि नहि दुग्धं श्वेतं कथयसि मुग्धे कथं पीतम् ॥ १७ ॥

सीकरविच्छुरिताग्रः शुण्डादण्ड इव कामनागस्य ।
भाति भवत्या वेणी मुक्ताफलगुच्छगुम्फितप्रान्ता ॥ १८ ॥

सखि रजनीपतिरधुना पीयूषकरोऽपि तापदश्चित्रम् ।
अपि रजनीगतपत्या ज्ञातः किं न त्वया हेतुः ॥ १९ ॥

वलितभ्रु मुकुलिताक्षं वीटीरसरञ्जिताधरं दूति ।
श्रमसीकराञ्चितं तद्वदनं धन्यः पिबत्येषः ॥ २० ॥

१. कामसंपत्तिर्बहुसंपत्तिश्च. २. शरीरमात्रं लेशमात्र च. ३. नागोऽस्ति प्रियत्वेन यासाम्. ४. छिद्रमुखाकलनस्य, विलासिनामाकलनस्य, विशिष्टनृत्यकलनस्य पक्षिनृत्याकलनस्य च. ५. सुरैस्तोषिताः सुरत उषिताश्च. ६. कस्यचित्कान्तामभिलाषुकं पुन.पुनः परिभ्रमणकारिणं कंचिद्विटं प्रति दूत्या उक्तिरियम्. वक्रोक्त्या तत्पतेर्धूर्तत्वद्योतनात्त्वयाऽत्र नागन्तव्यमिति व्यज्यते. ७. विरहिण्याः सख्याश्चोक्तिप्रत्युक्तिरियम् । इयमार्या श्रीगुरजीवनाथशर्मणां 'निशानाथेन मे दत्तं सखि दुःखं मुहुर्मुहु. । निशागतप्रियायास्ते वरं यन्मारणं नहि' इति पद्यस्यानुकारिणी । अत्र निशां गतः प्रियो यस्या इति द्वितीयसमासेन चन्द्रभार्यागामित्वं तस्य व्यज्यते.

वक्षोजकोकमिथुन तव मुखराकानिशाकरे जयति ।
विश्लेषमेति नेद कोऽय बाले चमत्कार ॥ २१ ॥
दृष्ट्वा सुधांशुबिम्ब तव वदनमिद विनिर्मित विधिना ।
कथमन्यथा समग्रा तदीयसम्पत्तिमावहति ॥ २२ ॥
वसति सखि यत्र कान्त कान्ताप्यायाति तत्रैव ।
चित्र सत्यपि कामे रति कुतो दूरमपसरति ॥ २३ ॥
समभिलषति मयि सुरत विगताभरणा निरञ्जना दूरात् ।
साऽदर्शयन्मृगाक्षी स्वभावताम्राधर दूति ॥ २४ ॥
विरहजदाह घोर दाहादग्नेरवेहि यदि नैवम् ।
प्राप्तु मृतरमणाङ्क सती कृशानौ कथ विशति ॥ २५ ॥
भक्षय राहो झटिति द्विजपतिबुद्ध्या रिपु कथ त्यजसि ।
किमु पुनरेति दिव य सेवित्वा वारुणीं भ्रष्ट ॥ २६ ॥
अपसर दूर मूढे नोचेदयमेति कुञ्जरो मत्त ।
प्रतिकुम्भिकुम्भबुद्ध्या प्रहारमिच्छुस्तव स्तनद्वन्द्वे ॥ २७ ॥
अहमेव मोक्षसुखदो हरे कथ त्वमिति गर्वमावहसि ।
सुरतेषु मोक्षसुखदा नीरजनयना न किं सन्ति ॥ २८ ॥
शिथिल सन्नपि कृष्णस्पर्द्धी वृन्दावनान्तिके तिष्ठन् ।
अजपरिचारणचतुरो राजति किमु कोपि गोपिकानाथ ॥ २९ ॥
नेत्रयोरनयो कान्ते तव सुन्दररङ्गयो ।
का स्तुति क्रियते लोके कुरङ्गाक्षिपराजये ॥ ३० ॥
अयि प्रियसखि ब्रूहि भीतेर्मान विलासिनो ।
म्लानाया नास्ति मर्यादा भग्ना दृढाद्भयीयसी ॥ ३१ ॥

१ तेन नायिकाया पुष्पवतीत्व व्यज्यते २ श्रीकृष्णेन सह मेलयितु कस्याश्चिद्दूत्या काञ्चिद्गोपीं प्रत्युक्तिरियम् । हे गोपि अय नानाथ कुत्सितस्तव पति किमु राजति अपितु नेति काकु । तस्मात्कृष्ण एवास्मिन्वृन्दावने राजति स एव त्वया सेवनीय इत्युपदेशो व्यज्यते । अत्र कवेर्हृद्गतोऽन्य एवार्थ । तत्र । वृन्दावन इति गोपीनाथ इति कृष्ण इति च सज्ञात्रयम् ३ वर्ण ८ मानविशेष

अये मृगाक्षि वक्षोजौ त्वदीयौ दधतोऽधुना ।
अशेषरसिकस्वान्तपतनादिव गौरवम् ॥ ३२ ॥

प्रिये तव नितम्बश्रीः श्लाघितुं शक्यते कथम् ।
अपि विश्वसृजा यस्यै दत्तमत्यन्तगौरवम् ॥ ३३ ॥

अधुना धुतरङ्गेण जडप्रकृतिना परम् ।
कोलाहलकरालेन सखि व्याकुलिता वयम् ॥ ३४ ॥

अधुना धुतमालेन स्निग्धश्यामलकान्तिना ।
वृन्दावनीपरिसरे बलादामोदिता वयम् ॥ ३५ ॥

आकृष्य शीतांशुगुणानशेषान्मन्ये मुखं ते विहितं विधात्रा ।
तेनैव लीलावति लोकमध्ये दोषाकरश्चन्द्र इति प्रसिद्धिः ॥ ३६ ॥

पाषाणकल्पं तव तर्कयामि वक्षःस्थलं स्थूलनितम्बबिम्बे ।
निरन्तरं पीनपयोधरस्य प्रसङ्गतोऽप्येति न मार्दवं यत् ॥ ३७ ॥

सदा विलासस्याकलनप्रवीणास्तथापि लास्याकलनप्रवीणाः ।
अवीरलोला अपि वीरलोला वारस्त्रियः कस्य न विस्मयाय ॥ ३८ ॥

मुखेन बाले तव सुन्दरेण शशी पराजीयत तर्कयामि ।
न चेद्वद त्वं कथमेष नित्यमाकाशमार्गेण सरीसरीति ॥ ३९ ॥

त्वद्वक्त्रलक्ष्मीविजितः सुधांशुर्योद्धुं पुनर्निश्चितचित्तवृत्तिः ।
समुल्लसल्लाञ्छनकैतवेन धृत्वा करे खेटकमुज्जिहीते ॥ ४० ॥

स्फुरत्स्तनद्वन्द्वजितेभकुम्भे गलप्रसक्तोज्ज्वलहीरहारे ।
प्रसीद मां स्वीकुरु धैर्यमिन्दुर्हरन्स्मरं प्रेरयति प्रसह्य ॥ ४१ ॥

अस्याः प्रसह्य स्तनमर्दयित्वा ससंभ्रमं धावति पश्य धूर्तः ।
इयं पुनर्नर्तितलोलनेत्रा सीत्कारमुग्धं स्मितमातनोति ॥ ४२ ॥

---

१. इदानीं समये धुकाररहितेन च. २. जलप्रकृतिना तरङ्गेण. ३. धुकाररहितेन, तमालेन. अत्र रूपकातिशयोक्त्या श्रीकृष्णेनेति फलति. ४. विलासिनां लास्याभावस्य च. ५. लास्यस्य नृत्यस्य. ६. सुगन्धिद्रव्यविशेषो वीराभावश्च. ७, वीरपुरुषसतृष्णाः ८. यद्धुडन्तमेतत्.

यस्य सद्मनि विभाति कामिनी कामनीतिनिपुणा मृगेक्षणा ।
कान्तिपूरजितशुद्धकाञ्चना काचनात्र लभते मुद न स ॥ ४३ ॥

दत्त्वा धनान्यपि हठादसव सुरक्ष्या-
स्त्याज्या त्रपा तु नहि सत्यपि जीवनाशे ।
सद्यो विहाय विदुषा वनजीवलज्जा
प्रीति प्रयत्नबलत परिपालनीया ॥ ४४ ॥

प्राप्नोति नव्यललनासविधे सुख य-
श्चन्द्रप्रभाविशदयामवतीषु मित्र ।
नो तस्य साम्यपदवी लभते कदाचि-
द्गीर्वाणपालपदवीसुखसचयोऽपि ॥ ४५ ॥

दयितविरहदूने रम्भया किंचिदूने
तव हृदि रतिरद्य व्यक्ततामाप सद्य ।
किमपि दहनकीलाभाजि पत्रे सलीला
लिपिरिव रविदुग्धैश्चित्रिता चित्रमुग्धे ॥ ४६ ॥

अधरितपरपुष्टा वाक्यत स्वान्ततुष्टा
सुरतकलहरुष्टा रूपलावण्यजुष्टा ।
युवतिजनवरिष्ठा श्रोणिभागे गरिष्ठा
भवति गुणविशिष्टा स्त्री न केषामभीष्टा ॥ ४७ ॥

इय बाला लोलन्नलिननिलसल्लोचनयुगा
शरद्राकाजैवातृकविजयविद्योतिवदना ।
प्रभाजालैर्लज्जीकृतहरिहरेन्द्रस्मरवधू-
र्जगत्यस्मिन्केषा हृदयहरण नैव कुरुते ॥ ४८ ॥

प्रभापुञ्जोदञ्चन्मुखविजितसफुल्लकमला
रमारम्या यूना मनसि दधती मोदलहरीम् ।

---

१ रम्भया किंचिदूने इति सबोधनम् २ अर्कवृक्षक्षीरै । तथा चार्कदुग्धेन श्वेतपत्रे लिखितानामक्षराणा प्रथममव्यक्तत्व भवति पश्चाद्रूपादिना तद्व्यक्तिर्यथा भवति तथा तव रतिस्तव प्रिये देशान्तरे गते व्यक्तेति भाव

यदि प्राप्नोत्येषा हरिणनयना हंसगमना
सखे प्राप्तस्तर्हि त्रिदशपतिसौभाग्यनिचयः ॥ ४९ ॥
मुखं ते दृष्ट्वेदं ललिततममिन्दुर्मृदुमदः
प्रहारं हस्ताभ्यामुरसि तनुते मे मतिरिति ।
न चेद्वक्षः श्यामं वहति किमसौ स्मेरवदने
मनस्वी को नाम प्रतुदति न दूनो निजतनुम् ॥५० ॥
अयं ज्योत्स्नाजानिस्तव वदनदूनोऽम्बरगुहां
प्रविष्टस्तत्रापि स्पृशति पुनरेनं दृढतमः ।
इति त्रासोद्रेकक्रमगलितसत्त्वः क्षयगदी
विधिर्दग्धो दीनं व्यथयति निदानं हि मृदुता ॥ ५१ ॥
नताङ्गि त्वद्वक्त्रश्रियमसहमानः कृशतनु-
र्जटारण्ये स्थित्वा गलदमलगङ्गे गुहगुरोः ।
त्रियामाप्राणेशः शृणु निजककलङ्कं शमयितुं
समुद्यत्संकल्पः परिचरति मन्ये तप इति ॥ ५२ ॥
सुधाहालाहालाहलमयमिदं तेऽक्षियुगलं
विधिर्ब्रूमोऽनर्थागममगणयन्नेव विदधे ।
नचेत्कस्मादेतत्स्वपथपतितानां सुखयति
प्रिये यूनामाघूर्णयति हृदयानि व्यथयति ॥ ५३ ॥
प्रतिक्षणविलक्षणा धवलकृष्णशोणच्छविः
सुधागरसुरामयी तव दृशोः कटाक्षच्छटा ।
मृषेति यदि मन्यसे कथय तर्हि यूनः कथं
प्रमोदयति तापयत्यति तनोति मूढाशयान् ॥ ५४ ॥

---

१. ज्योत्स्नापतित्वेन चन्द्रस्य कुत्राप्यदर्शनाच्चिन्त्यमेतत्. २. इत आरभ्य श्लोकपञ्चक-मेककल्पनाक्रमेव कविना 'अमी हलाहलमदभरे श्वेतश्यामरतनारा जीवतमरतझुकिझुकि-परतजिहिचितवत इकवार' इति प्राचीनभाषादोहामादाय शक्तिद्योतनार्थं विरचित-मिति बोध्यम्.

अस्या नेत्रयुग सुधागरसुरासारै समै सभृत
शुक्लश्यामलशोणकान्तिललितैश्चक्रे विधिर्यल्लत' ।
पीत्वा द्रागत एव सर्वरसिकाश्चेतोभिरेतद्रस
जीवन्ति क्षयमाप्नुवन्ति सहसा मूढा लुठन्ति क्षितौ ॥ ५९ ॥
पीयूषहालाहलमद्यनिर्मिते वलक्षकृष्णारुणिते तवेक्षणे ।
न चेत्पिवन्तो रसमेतयो कथ हृप्यन्ति ताम्यन्ति लुठन्ति विह्वला ॥५६॥
सितासितारुणमक्षि तव सुधागरलमधुशोभि ।
किमन्यथा सखि सुखयति व्यथयति लसति विलोभि ॥ ५७ ॥
वक्षोजातौ कनककलशौ रम्यरोमावलीय
श्लक्ष्णा रज्जुर्लसति सरसो नाभिकूपो गभीर ।
प्रौढा तृष्णा मम नयनयोर्नीरजाक्षि प्रशाम्ये-
देपामेषा सिचयरचिता नैव गुप्तिर्यदा स्यात् ॥ ५८ ॥
हारान्मा हर भारदान्सुमनसा माला महामोहदा
कर्पूरो रुज एव पूरयति हा वैद्य किमावेद्यते ।
मौन नीरवियोगिन सुखयति क्षीर न वह्निर्व्यथा-
सेकै शाम्यति किं सखि द्रुतमतस्तेनैव मा मेलय ॥ ५९ ॥
भवति प्रकट' कथ न चन्द्रो दिवसे कान्त वद त्वमत्र हेतुम् ।
तव वक्त्रजितो ह्रिया शशाङ्को न दिवोदेति मतिर्ममेत्यमस्ति ॥ ६० ॥
यत्सुन्दरीवसनसम्भवमन्दवाता-
न्निर्वाणमाप मलसबालताऽपि दीप ।
आलिङ्गनाद्दृढतराद्धद मित्र तासा
पुसा सुघोरनरके पतन कुत स्यात् ॥ ६१ ॥
श्रीमत्कुन्दननन्दनेन्द्रश्रीकृष्णरामरचितायाम् ।
मुक्तकमुक्तावल्या चतुर्थसर एष सपूर्ण ॥ ४ ॥

---

१ इद शोकान्छन्द

## ॥ अथ काव्यमालाप्रशंसा नाम पञ्चमः सरः ॥

अगणितगुणजालायै सरस्वतीलास्यरङ्गशालायै ।
प्रतिपत्तिविशालायै प्रणतिं कुर्मः कवीन्द्रमालायै ॥ १ ॥

सदा समुद्यत्कविताछविभ्यः सपत्नवाग्जालभिदापविभ्यः ।
जाड्यान्धकारापहृतौ रविभ्यः कृष्णः प्रणामं कुरुते कविभ्यः ॥ २ ॥

विना दुर्गाप्रसादं को यस्य न्यासे पटुः पुमान् ।
काव्यमालामनुः सोऽयं विदुषामस्तु संविदे ॥ ३ ॥

यामश्वतां चन्दति चारुचित्तं स्वच्छन्दमुद्गच्छति या स्फुरन्ती ।
विश्रूयते या श्रुतिसारभूता तां नामि गङ्गामिव काव्यमालाम् ॥ ४ ॥

मुरारिपदनिष्ठापि शंभुसूक्तिपरायणा ।
काव्यमाला चमत्कारं कथंकारं करोति नो ॥ ५ ॥

कलितकमनीयकमलाममृतलहरिकाविचित्रविन्यासाम् ।
ललदङ्गामवलम्बे गङ्गां वा काव्यमालां वा ॥ ६ ॥

मुखविस्फुरितस्तोत्रा प्रसादशीला सुवर्णमयमूर्तिः ।
केषां न वन्दनीया मुनिमाला काव्यमाला वा ॥ ७ ॥

अयि नमत काव्यमालां त्रिपुरकथामिव निबद्धहरविजयाम् ।
नरसिंहक्रीडामिव परमप्रह्लादपरिपोषाम् ॥ ८ ॥

कलयामि काव्यमालां वलक्षपत्रां मरालपङ्क्तिमिव ।
वानरसेनामिव पुनरनर्घराघवसमुन्मेषाम् ॥ ९ ॥

त्रिपथा सहस्रपथगा जलधौ लीना गता तमुल्लङ्घ्य ।
सजडा जाड्यविरुद्धा संप्रति गङ्गा क काव्यमाला क ॥ १० ॥

---

१. अस्याः प्रशंसाया अर्धो भागः प्रथमं काव्यमालासमागमेन मुद्रितोऽपि ततः परं विरचितेनापरभागेन सह सर्वाप्येषा प्रशंसा अत्रैकसरत्वेन स्थापितेति पुनरवश्यं विलोकनीया. २. एतन्नामक पण्डितं पक्षे देव्याः प्रसादम्. ३. रचनायां न्यासादिविधौ च. ४. मन्त्रः. ५. मुरारिः कविः केशवश्च. ६. शंभुः कविः शिवश्च. ७. काव्यमालापक्षे रत्नाकरमहाकविविरचितं हरविजयाभिधं महाकाव्यम् तच्च स्वल्पेनैव कालेन प्रकटीभविष्यति.

हृदयान्तरविलसितया कदापि न म्लानया महातपत ।
हृतया न शिलीमुखतो वनमाला काव्यमालया हसिता ॥ ११ ॥
बुधचित्तचञ्चरीकोच्चुम्बितरसमाधुरीमहिता ।
उद्गिरति काव्यमाला श्रुतमात्रा चित्रमामोदम् ॥ १२ ॥
अहह शृणु काव्यमाला पर महार्ह्यऽप्यभूरिधनलभ्या ।
छिद्रविहीनापि पुन सुवर्णगुणगुम्फिता चित्रम् ॥ १३ ॥
नवलापि चित्रवर्णा सहृदयनयनाञ्चलै पुन पीता ।
आभाति काव्यमाला वन्धविशेषेण चारुणा जगति ॥ १४ ॥
सद्गुणजालग्रथितोज्ज्वलवृत्ताक्षररचितच्छविच्छुरिता ।
ललतु गलेऽखिलविदुषा मौक्तिकमाला च काव्यमाला च ॥१५॥
स्निग्धश्यामलवर्णा मधुरध्वनिविस्फुरच्चमत्कारा ।
रसनिर्भरा विजयतामम्बुदमाला च काव्यमाला च ॥ १६ ॥
प्रतिगुच्छमुद्गिरन्ती रसधारामधिकमुद्यदामोदा ।
विलसति सदालिसेव्या सुममाला काव्यमाला वा ॥ १७ ॥
क्वचिदुद्यदनुप्रासा परमोजो बिभ्रती ध्वनिप्रवणा ।
नहि कस्य दुरवगाहा भटमाला काव्यमाला वा ॥ १८ ॥
अर्थान्समर्थयन्ती स्फूर्तिविशेषैस्तमिस्रमुन्मथ्य ।
अञ्जनतातिं दधाना दीपकमाला च काव्यमाला च ॥ १९ ॥
विबुधसमादरणीया विचित्रयन्ती रुचि रसैरनिकाम् ।
वितरति परमाह्लाद सुधासपत्नीव काव्यमालेयम् ॥ २० ॥
स्फुटचारुचित्रयत्रा लसदर्थालकृति सुधामधुरा ।
प्रकटितकलाविलासा जयनगरी काव्यमाला च ॥ २१ ॥
मसृणाञ्जनप्रधाना सकलकलापूरिता पदार्थैर्वै ।
देशेपु काव्यमाला भ्रमति पर धूमशकटीव ॥ २२ ॥

१ काव्यमालापक्षे व्यञ्जनावृत्तिरञ्जनम् २ सुधा+मधुरा सुधाम+धुरा ३ जयपुरम् ४ अञ्जन व्यञ्जना शकटीपक्षे तु 'एञ्जनम्' इति प्रसिद्धो यन्त्रविशेष ५ सकलाभि कलाभिर्युक्ता पक्षे कलकलेन सहिता ६ रेल, रेलवे, आगगाडी, ट्रेन्, इति नानानामप्रसिद्धा

मधुरं किमपि रणन्ती[1] परोक्षमप्यर्थजातमभिदधती ।
सरला[2]पि काव्यमाला वक्रत्वं भजति तार[3]मालेव ॥ २३ ॥
विबुधान्विबोधयन्ती सदनेकाक्षररचिताश्चर्या ।
प्रतिमाससमुदेति दिवा विलक्षणा कापि काव्य[4]मालेयम् ॥ २४ ॥
हंहो सदानव[5]श्रीरपि प्रवृत्ता हिताय विबुधानाम् ।
खचितावयवापि धरातलोदया भाति काव्यमालेयम्[6] ॥ २५ ॥
व्याख्याविशेषबलतो गुरुं हसन्ती सदक्षरस्फुरणा ।
श्रीकण्ठचरितचर्चा जगदर्चा जयति काव्यमालेयम् ॥ २६ ॥
कोमलपदविन्यासा[7] संदधती मुदमलंकृतिध्वनिभिः ।
सरसा कदा मिलिष्यति किमुरे कान्ता न काव्यमाला सा ॥२७॥
लेखचमत्कृतिनव्या न व्याकृत्या[8] विरोधमादधती ।
कलयति कुशलमनोज्ञा नो ज्ञानं किमिह काव्यमाला वः ॥२८॥
निभृतभुजंग[9]विहारा कथाप्रसङ्गो[10]पयोगिनी सततम् ।
वक्रगतिविशिष्टतया दुरासदा भाति काव्याली[11] ॥ २९ ॥
रसरीतिबन्धनिपुणा पदे पदे व्यञ्जयन्त्यभिप्रायम् ।
गणिकेव काव्यमाला स्वल्पव्ययतः समायाति ॥ ३० ॥
रसवत्या[12]पि शुक्लरुचिर्धृतसमपद्या[13]पि विषमपद्या[14] च ।
दलगाऽपि विबुधगलगा ललत्यलं काव्यमालेयम् ॥ ३१ ॥
वाच्यै[15]युतापि स्तुत्या विलक्षणापि च सुलक्षणो[16]पेता ।
लक्ष्यैक्रमा[17]प्यलक्ष्यक्रमा जयति काव्यमालिका चित्रम् ॥ ३२ ॥

---

१. व्यञ्जयन्ती, पक्षेऽव्यक्त शब्दं कुर्वन्ती. २. प्रसादगुणयुक्तापि वक्रोक्त्यादिभिर्वक्रत्वं भजति, पक्षे ऋज्वी कचिद्वक्रा च. ३. सद्यो दूरदेशवृत्तान्तप्रापको यन्त्रविशेषः. ४. काव्यः शुक्रनामको ग्रहविशेषश्च. ५. सदा+नवश्रीः, स-दानवश्रीः. ६. शुक्रमाला च. ७. छेकापह्नुतिरियम्. ८. व्याकरणेन. ९. भाणप्रहसनादिप्रसिद्धा विटाः। व्यालीपक्षे तु सर्पाः. १०. 'कथाप्रसङ्गो वार्तायां विषवैद्येऽपि वाच्यवत्' इति विश्वः. ११. काव्याली काव्यमाला, पक्षे का, इति प्रश्ने व्याली सर्पिणी इत्युत्तरम्. १२. पाकशाला, शृङ्गारादिरसविशिष्टा च. १३. समपद्धतिः समवृत्ता च. १४. विषमपद्धतिर्विषमवृत्ता च. १५. निन्दा शक्यार्थश्च. १६. सल्लक्षणा, लक्षणाख्यवृत्तिविशिष्टा च. १७. लक्ष्यक्रमालक्ष्यक्रमौ ध्वनिभेदौ.

दुर्गाप्रसादविदुषो विज्ञत्वं वक्तुमत्र को विज्ञः ।
इह येन काव्यमाला निर्णीता साधुवृत्त्यैव ॥ ३३ ॥
किसलयकलितच्छाया मोदविधात्री सुवर्णकेतमाला ।
सर्वत्र सरसपद्या काननमालेव काव्यमालेयम् ॥ ३४ ॥
अलमप्रतिहतगतया प्रकल्पयन्त्या कलासु कौशल्यम् ।
पुरुपर्श्रमपदा ता क्लिन्टोर्या काव्यमालया तुल्ये ॥ ३५ ॥
रसगङ्गाधरमङ्गा त्रिवर्गदा सर्वमङ्गला वन्द्या ।
कालीव काव्यमाला परं त्विय पर्णसङ्ग्रहादधिका ॥ ३६ ॥
व्यापारं तिरयन्त्या मोदेन मनो बलादलसयन्त्या ।
अपकृतमुपकृतमथवा नो जाने काव्यमालया कृतिनाम् ॥ ३७ ॥
कविपरिषदलंकाराऽलंकारा चतुरचित्तवृत्तीनाम् ।
चारुचमत्कृतिसारा सा राजतु काव्यमालेयम् ॥ ३८ ॥
पुस्तकपिशाचगर्वं निखर्वयन्ती स्वकीयमुद्रणतः ।
प्रलार्थदस्युकीर्तिं तिरयन्ती काव्यमालिका जयति ॥ ३९ ॥
द्राक्षासितादितोऽमृतमुत्तममधरामृतं ततः स्त्रीणाम् ।
उत्तमरसा ततोऽपि व्यानष्टे काव्यमालिका कृष्ण ॥ ४० ॥
रुचिरनराचरनर्यामुच्चावचवस्तुजातरैनिर्याम् ।
मद्राति संमुद्रोन्मेषा जगतीमिव काव्यमालिका नहि क ॥ ४१ ॥
सारविशाला कलिलध्वनिजाला काव्यमार्गगामी ।
परनिर्वृतिनिर्वर्तीनी नागोहालीकमपि किञ्चित् ॥ ४२ ॥

---

१ [illegible] विस्मयमानसाश्चित वा　२ गद्यैरि [illegible] प्रदर्शितपाठा न ३ मत्स्या, पक्षे मनोरमता । अन्याय [illegible] । दह तावदेकस्यापि काव्यस्य दानप्र-तिबन्धकता प्रसिद्धतरममापुस्तकं हि पुनरस्मद्गोरिति　४ प्राप्ततदन्दृभा । पक्षे दौमनस्यानां कृता मान्या [illegible]निति　५ प्रवर[illegible]नैति पारानाम्　६ एतद्ग्रपद्माद नमदन　७ महामाशा　८ प्रगविशेष [illegible]　९ [illegible]　१० [illegible] द्रौणरोन सर्दशम् [illegible] गामोभिगोमिति　११ कुञ्चिता [illegible]मिति पाठम् '[illegible]-उपास्य न तक्रीतं' तान्यपि [illegible]' इति [illegible] दह [illegible]

दुर्गाप्रसादविदुषा काशीनाथं सहायमवलम्ब्य ।
निर्णयसागरयन्त्रे प्रतिमासममुद्रि काव्यमालेयम् ॥ ४३ ॥

भावै रसं व्यञ्जयति स्फुटक्रमैरहो मुदं यच्छति शीलिता रहः ।
[1]सकर्णपूरा मम सा क्व वर्तते प्राणप्रिया किं नहि काव्यमालिका ॥ ४४ ॥

विपञ्चि मा पञ्चममञ्चय स्वनं मा कीर किंचिद्गिरमुद्गिर क्षणम् ।
यद्भारती भावविशेषभावना श्रीकाव्यमालामवलोकतेऽधुना ॥ ४५ ॥

[2]आमन्त्रयस्वोशनसं चला का दानार्थवाची कतमोऽस्ति धातुः ।
का मुद्र्यते निर्णयसागराख्ययन्त्रालये संप्रति काव्यमाला ॥ ४६ ॥

मुद्राङ्कितं यस्य समीपमेति श्रीकाव्यमालास्थितकाव्यजातम् ।
चित्तं चलाक्षीव विनोदयन्ती प्रीतिः समाश्लिष्यति काव्यजा तम् ॥ ४७ ॥

अमुद्रि काव्यस्रजि तन्न काव्यं व्यङ्गं न यच्चारुतरं व्यनक्ति ।
व्यङ्गं न तद्यन्न मुदं दधाति सा मुन्न या चित्रयते न चित्तम् ॥ ४८ ॥

विद्याजडैरस्मि न सत्कृतेति मा म्लानिमङ्गीकुरु काव्यमाले ।
यतस्त्वदामोदविदग्धचेतास्त्वां श्लाघते काव्यविदां समाजः ॥ ४९ ॥

[3]कोऽपि स्रवन्मञ्जुमरन्दभव्यमाकन्दमाला मुमगुच्छजाला ।
विहङ्गलोलन्मृदुलप्रवालसमूहगुञ्जद्भ्रमरा विभाति ॥ ५० ॥

उद्बिभ्रती परमचारुकलाविलासं
स्फूर्जत्सुवृत्ततिलकच्छविभिः स्फुरन्ती ।
आविष्कृतप्रहसनैर्हृदयं हरन्ती
वेश्येव पश्य भुवि नृत्यति काव्यमाला ॥ ५१ ॥

आस्तामुदञ्चितचमत्कृतिचन्द्रशाला
संमूर्छदच्छरुचिगुच्छगुणैर्विशाला ।
प्रत्यक्षलक्षितविलक्षणयुक्तिजाला
कौतूहलाय कतिनां किल काव्यमाला ॥ ५२ ॥

---

१. काव्यविशेषेण पक्षे कर्णभूषणेन सहिता । अत्र च्छेकापह्नुतिरलंकारः. २. अन्तर्लापिकेयम्. हे काव्य, मा लक्ष्मीः, लादाने, इति प्रश्नत्रयस्य क्रमेणोत्तरत्रयम्. ३. इयमप्यन्तर्लापिका । पादाद्यन्तपर्यालोचनया 'काव्यमाला विलसति' इति पदद्वयं निःसरति.

एषा पुरातनमहाकविकीर्तिमाला
चेतस्तम कदनकर्मणि भानुमाला ।
अस्मादृशा परिपचेलिमभाग्यमाला
प्राकाश्यमाकल्यता किल काव्यमाला ॥ ९३ ॥
शृङ्गारकेलिमपि शान्तपवित्रभावा
वीरक्रमामपि महाकरुणप्रभावाम् ।
इत्थ परस्परविरुद्धरसैर्विशाला
शक्नोति क कलयितु वद काव्यमालाम् ॥ ९४ ॥
यदवधि परिशुद्धाऽमुद्रि नो काव्यमाला
तदवधि न जगत्या जावजी ख्यातिमाप ।
यदवधि पुनरस्या न प्रवृत्त प्रचार-
स्तदवधि बुधवर्गो व्यग्रचित्तश्चचार ॥ ९५ ॥
अलङ्कृतिचमत्कृति स्फुरितशुद्धवर्णाकृती
रसध्वनिविनोदिनी चतुरमानसामोदिनी ।
मनोहरपदक्रमाऽद्भुतगभीरभावोज्ज्वला
कुरङ्गनयनेव मा मिलतु काव्यमाला मदा ॥ ९६ ॥
मुम्बापुर्यामहह वद का मुद्यते काव्यमाला
देशे देशे कृतिभिरथ का गृह्यते काव्यमाला ।
पृथ्वीपालैरनिशमिह का श्रूयते काव्यमाला
तेषामग्रे कविभिरपि का पठ्यते काव्यमाला ॥ ९७ ॥
गुच्छे गुच्छे रुचिररचन काव्यकूट वहन्ती
काव्ये काव्ये सयतिनियम वृत्तछन्द किरन्ती ।
वृत्ते वृत्ते सरसमगुण व्यङ्ग्यमुन्मीलयन्ती
व्यङ्ग्ये व्यङ्ग्ये मदयति मुहु काव्यमाला जगन्ति ॥९८॥
उत्पन्ने [illegible]
सद्गुच्छ[illegible] दुर्गाप्रसादेन वा ।

१ [illegible]

काशीनाथपरिष्कृतच्छविरियं सा काव्यमालाऽधुना
श्रीमज्जावजिना बुधोपकृतये मुद्राक्षरैर्मुद्यते ॥ ५९ ॥

विद्यावेश्मपयोनिधीननवधीन्निर्मथ्य निष्कासितै-
र्धीशाणोल्लिखनप्रवृद्धरुचिभिः सत्काव्यरत्नव्रजैः ।
यस्या गुम्फनमाचरन्ति चतुरा दुर्गाप्रसादादयः
कण्ठं प्राप्य चमत्करोतु विदुषां सा काव्यमाला चिरम् ॥ ६० ॥

सामोदं दधती व्रजं सुमनसामच्छाच्छगुच्छच्छविः
संछन्ना छदसंपुटेन मसृणोदारैर्गुणैर्गुम्फिता ।
विद्वच्चित्तमिलिन्दचुम्बितरसा चञ्चद्विचित्राकृति-
र्जीयादत्र चिरं परागमहिता श्रीकाव्यमाला विभो ॥ ६१ ॥

क्वापि प्रौढमहोत्सवा क्वचिदहो निर्वेदशोकोत्तरा
कुत्रापि प्रधनोद्धता क्वचिदलं शृङ्गारनर्मोज्ज्वला ।
इत्थं व्यक्तविचित्रवृत्तविभवैरुच्चावचप्रक्रमा
चित्ते किं न चमत्करोति जगती सत्काव्यमालाथवा ॥ ६२ ॥

नानामत्तमयूरवृत्तविलसद्विच्छित्तिरुच्चैर्यति-
व्यासङ्गा हरिणीमनु क्वचिदलं शार्दूलविक्रीडिता ।
विस्फूर्जद्भुजगप्रयातविषमा सार्योपगीतिक्रमा
गौरीताततटीव रञ्जयतु वः सा काव्यमाला मुहुः ॥ ६३ ॥

सत्काव्यानि सुमन्ति तन्निचितयो गुच्छन्ति मुद्राङ्कितं
पुस्तं मालति सांप्रतं शिखरति स्फीता ममेयं कृतिः ।
मालाकाराति लेखनीतिनिपुणो दुर्गाप्रसादः सुधी-
र्विद्वांसो मधुपन्ति भावविलसद्विच्छित्तिरामोदाति ॥ ६४ ॥

---

१. मत्तमयूर छन्दोविशेषः. पक्षे पक्षिविशेष.. २. विश्रामो विच्छेदापरपर्यायः. पक्षे संन्यासिनः. ३. छन्दो मृगी च. ४. छन्दोविशेषः पक्षे सिंहस्य विक्रीडितं यस्याम्. ५. छन्दो भुजगगमनं वा. ६. छन्दोभेदो निम्नोन्नता च. ७. आर्योपगीती गाथाभेदद्वयम्. क्रमः संयोगविशेषः. पक्षे आर्या पार्वती तद्गीतिक्रमविशिष्टा. ८. हिमाचमः, ९. नामधातुक्रियापदम्. एवमग्रेऽपि.

यस्या क्षेत्रमतार्कि निर्णयकलायन्त्र धनी जावजी
बीज काव्यचय कृपीवलपदे दुर्गाप्रसादो बुध ।
काशीनाथकृती पुन परिचर सेय सदच्छच्छवि
श्रीगुच्छच्छुरितच्छदा प्रसरता सत्काव्यमालालता ॥ ६५ ॥

ह हो शाब्दिक तानि तान्यनडुहो रूपाण्यल रूपय
त्व भोस्तार्किक वज्रकर्कशतरांस्तर्कान्समुत्तर्कय ।
ब्रूहि स्वानुभव त्वमप्यधिसभ वदान्तिनव्य क्षण
श्रीकृष्णस्तु पुन पुन कलयति श्रीकाव्यमालारसम् ॥ ६६ ॥

श्लोकैन द्रागनॊशि व्यरचि हृदि सता चङ्क्रम समदेन
व्युत्पत्त्या पर्यवलिग ग्लपितमिव सुधामाधुरीमुग्धकीर्त्या ।
चातुर्येणाप्यचारि स्फुरितमिव जगद्भागधेयेन ह हो
किं किं नो जातमस्मिन्नवतरति महीं काव्यमालाप्रबन्धे ॥ ६७ ॥

प्राय सशुद्धवर्णावलिललितपदा टिप्पणीव्यञ्जितार्था
या प्राप्नोत्येकवर्षावनिकृतसमया रूप्यपट्कव्ययेन ।
तत्ताद्दक्प्रक्तकाव्यग्रथननियमतस्तुन्दिलस्वच्छगुच्छा
स्वच्छन्द सेयमास्ता सहृदयहृदयालम्बिनी काव्यमाला ॥ ६८ ॥

किमत्र बहुनोक्तेन प्रतिगुच्छविलक्षणा ।
काव्यमाला सरस्वत्या॰ सर्वस्वमवगच्छथ ॥ ६९ ॥

भवता यदि जिज्ञासा वैमनस्ये किमौषधम् ।
काव्यमालारस हित्वा पर ब्रूम किमौषधम् ॥ ७० ॥

एकेनापि स्वगुच्छेन विश्वमामोदित यया ।
माहात्म्य काव्यमालाया मम वाचा न गोचर ॥ ७१ ॥

श्रीमद्भुण्डारदेशे हसितसरपुरी प्राज्ञसर्वै समेता
गुप्ता श्रीमाधवेन स्फुरति जयपुरी कापि यत्र स्थितेन ।

---

१ अत्र जावजी दुर्गाप्रसादकाशीनाथा चेति त्रयोऽस्या काव्यमालाया प्रवर्तका इति ध्वनितम् २ अनाशीति भावे लुङ् एवमग्रेऽपि

श्रीकृष्णाख्येन कीर्तिस्थितिमभिलपता काव्यमालाप्रशंसा-
काव्यं कृत्वा कनीयः प्रकटितमधुना तद्बुधाः शोधयन्तु ॥ ७२ ॥
श्रीमत्कुन्दननन्दनवैद्यश्रीकृष्णरामरचितायाम् ।
मुक्तकमुक्तावल्यां पञ्चमसर एष संपूर्णः ॥ ५ ॥

---

## ॥ अथ हास्यवर्णनं नाम षष्ठः सरः ॥

होलोत्सवात् ।

दूषणमपि प्रयुक्तं प्रत्युत कुत्रापि भूषणं भवति ।
ननु शृणुत होलिकायामवाच्यमप्युच्यते श्रेयः ॥ १ ॥
ते निश्चितमश्लीला भणन्ति ये भाणमेतमश्लीलम् ।
अधिकृत्य फाल्गुनकथामश्लीलं भूषणं न जानन्ति ॥ २ ॥
ब्रह्माद्या देवताः स्वान्ते स्पृहयन्ति यमन्वहम् ।
व्यात्तास्यमुल्लसन्नासं तं वन्दे सुभगं ** ॥ ३ ॥
प्रिये पश्य **स्येदं निष्ठुरत्वमहो महत् ।
संताडितोऽप्ययं **रुच्चैर्नासां बिभर्ति यत् ॥ ४ ॥
विधेरप्यज्ञतातान्वि मम चेतसि चञ्चति ।
ब्रूहि कं गन्धमाघ्रातुमुच्चैर्नासो ** कृतः ॥ ५ ॥
प्रणमत रजस्वलाया दरविवृततया समुच्छूनम् ।
***** कुठारक्षतमिव रुधिरप्रवाहाविक्लिन्नम् ॥ ६ ॥
कैरपि निरधारि यथा मुक्तिर्वाराणसीमरणात् ।
निरधारि मयापि तथा सहस्र**दर्शनान्मुक्तिः ॥ ७ ॥
**** पद्मनयने तव गजशुण्डाग्ररन्ध्रमिव ।
कुङ्कुमकेदारस्फुटकुरङ्गखुरलक्ष्मवद्भाति ॥ ८ ॥
अयि तव *****कृतिरपहरति मनो न कस्य दर्शनतः ।
अन्तःस्थशोणमुक्ता दरविवृतमुखी सुवर्णशुक्तिरिव ॥ ९ ॥

---

१. होलिकोत्सवे. २. श्रेयस्करमित्यर्थः. ३. इय समस्या पूरिता. ४. अभूतोपमेयम्.

योगीश्वरैरप्यजितस्य मीनध्वजस्य जेता भुवि कोऽपि नास्ति ।
त्वं तन्वि धन्याऽसि यतो ** स्ते त तस्य दण्ड ग्रसते समूलम् ॥ १० ॥

अन्यत्र देशे जटिता जगन्ति ग्रसिष्यते विश्वसृजेति मत्वा ।
सकोचयित्वा किमु पादमूलद्वयान्तराले निहिताऽस्ति ** ॥ ११ ॥

कौरङ्ग पदलक्ष्म किं रतिपते सिंहासन किं खनी
रत्नाना किमु हेमशुक्तिशकलप्रश्लेषसावि॰ किमु ।
ब्रह्मानन्दमहापद किमु किमु स्फीता सुधावापिका
स्मृत्वा भव्य ** कान्तिं मुहुरिति स्फूर्जन्ति सभावना ॥ १२ ॥

कौन्ते कापि खनिर्विभाति कदलीकाण्डद्वयीमध्यगा
छन्ना शाद्वलजालतो मुखगलन्नीरा गभीराशया ।
चित्र किं च जितात्मनामपि रुचिं सपादयन्ती मुहु
सूते लक्षणलक्षितानि खननाद्रत्नानि या यत्नत ॥ १३ ॥

शैष्पतृणावृत ** क्षेत्रोत्कषणक्रियामहासीरम् ।
** विपाटनसार परिवाकार लकारमहमीडे ॥ १४ ॥

ध्यानप्रकल्पितकलत्रमुदग्रकम्प
प्रोद्दामसीत्कृतमुदञ्चितलोचनान्तम् ।
आकुञ्चितावयवमास्यगलत्प्रसेक
मिश्र सुखेन कर *** मातनोतु ॥ १५ ॥

सीत्कारसस्कृतानि कणितकनककणीप्ररुचिराणि ।
स्मरसि रतानि सखे किं नहि ** विलुण्टनानि तन्वङ्ग्या ॥ १६ ॥

इय ** गण्डाकलितदलखण्डा करलस-
त्करण्डा चामुण्डाचरणयुगदण्डानतिपरा ।
प्रचण्डा श्रीखण्डाकलितरुचतुण्डा समधिक
वितण्डाभिर्भण्डानपि हसति कुण्डायित ** ॥ १७ ॥

---

१ तथा २ रूपकातिशयोक्ति ३ अनाथ शष्पपदस्य प्रयोगे प्रमाणजिज्ञासाया 'शष्प मदीय गतम्' इति प्राचीनपद्यस्यकारा कविना दत्त इति सतोऽस्त्ययम्

कुरु त्वं जारं चेदभिलषसि मुग्धे रतिसुखं
वृथा संकल्पस्ते गृहपतिमृतेऽन्यं न रमये ।
गुणाञ्जारप्राप्तौ गणय मधुरं नित्यमशनं
धनाप्तिः सत्कारो भण गृहपतौ व्यस्तमपि किम् ॥ १८ ॥

उद्यत्कामलसद्रतिं सुरपुरीं रम्याप्सरोविभ्रमां
सोत्साहं पुरुषायितामिव वधूं दृष्ट्वोपरिष्टात्स्थिताम् ।
स्वःशूलीमिषतः समुत्थितमहो कृत्वा निजं व्यञ्जनं
मन्ये मित्र विलासिवज्जयपुरं प्रेम्णा समालिङ्गति ॥ १९ ॥

## अथ पण्डितोपहासः ।

इह सामान्यानुगमं समुपदिशन्तः स्थलेष्वनेकेषु ।
लिङ्गपरामर्शपरा नवीननैयायिका यान्ति ॥ २० ॥

गणधातुपूरितमुखः सुतरां स्त्रीप्रत्ययप्रीतिः ।
कः पुनरयं नपुंसकलिङ्गं मुहुरामृशन्नेति ॥ २१ ॥

सलकारधातुसंग्रहमुखकुहरा स्फोटविस्फारा ।
वद केयं पुनरन्या पुरतः पुंलिङ्गसाधिनी स्फुरति ॥ २२ ॥

व्याकरणतरुणतरणिं ये बहु पश्यन्ति ते भवन्त्यन्धाः ।
कथमन्यथा न कविताकटाक्षमेते परीक्षन्ते ॥ २३ ॥

एते वैयाकरणपशवः स्वीयमायुर्वृथैव
प्राज्ञंमन्याः श्रवणकटुभिः शब्दजालैः क्षिपन्ति ।
शश्वत्कान्ताधरमधुरतावर्णनं कुर्वतां न-
स्त्वाशीर्वादैरिह सहृदयाः प्रत्यहं वर्द्धयन्ति ॥ २४ ॥

---

१. इदं पद्यं जयपुरविलासोचितन्यासमपि हास्यविषयत्वादत्र प्रक्षिप्तम्. २. स्वःशूलीति संज्ञकोऽत्युच्चः प्रासादविशेषः, तस्य व्याजात्. ३. विलासीव । विद्यमानविलासिकं च. ४. उपहासत्वात्तैर्न क्षोभितव्यम्. ५. परापरसामान्यज्ञानं वेश्यासङ्ग च. ६. वह्निव्याप्यधूमवानयं पर्वत इति रूपे व्याप्तिविशिष्टपक्षधर्मताज्ञाने, पुंव्यञ्जनस्य पुनःपुनरान्दोलने च. ७. गणनां बहूनां च. ८. लडादिः पुंव्यञ्जन च लकार इत्युच्यते. ९. 'कथमन्यथा न तेषां दृष्टिर्विषयीकरोति काव्यार्थम्' इति पाठान्तरम्.

य दृष्टोऽपि नमस्कृतोऽपि परित स्पृष्टोऽपि शस्तोऽपि वा
व्याधूतोऽपि विभीपितोऽपि नितरा मूकोऽह्नि घूको यथा ।
चित्र किच गुदेऽङ्गुलिप्रणयनाद्य किंचिदाभापते
तस्मै मैथिलसङ्गिने मम नति श्रीरङ्गिणे भङ्गिने ॥ २५ ॥

अथ बीभत्सरसः ।

पङ्क्त्या यतामपथ्या पथ्या रथ्यावता विशेपेण ।
आभाति कापि रथ्या जनितजुगुप्सा किमत्र वद मिथ्या ॥ २६ ॥

यस्या महापङ्किलकुट्टिमान्त पतन्त्यमेध्याम्बुवहा प्रणाल्य ।
या लङ्घ्यते सद्धतनासिकास्यै कष्टा प्रतोली कलिता न कै सा ॥२७॥

इतस्ततो वान्ति विशिप्य यस्या वाता शकृद्देशमविहारविस्ता ।
सा वर्ण्यते रौरवराजधानी केन प्रतोली मनसाप्यगम्या ॥ २८ ॥

विप्नङ्मूत्रविसूत्रनिर्झरशता जम्बालजालोल्लुठ-
ज्जन्तु थूत्कृतिबुद्बुदौघगहना नासाकफै पिच्छिलाम् ।
प्रौढप्रस्तरदन्तुरा समुदयद्दुर्गन्धपूरान्तरा
सर्वस्व नरकस्य केन विशिखा स्मृत्वैव नो वम्यते ॥ २९ ॥

अर्थान्तर्लोपिकाः ।

गाण्डीववाँस्त्रिभुवने कतम श्रुत का
सज्ञा स्वरस्य गरुडध्वजकामिनी का ।
मुग्धा कुरङ्गनयना सुरतस्पृहालु
कान्त गिरा मधुरया किमु वक्ति ' नाँजी ' ॥ ३० ॥

को यादवेन्द्रभगिनीदयित प्रसिद्धो
गोपाङ्गनाम्बरविलुण्ठकमाह्वय त्वम् ।

---

१ भङ्गी नाम कोऽपि मैथिलप्रसङ्गी विलक्षण पण्डितस्तद्वर्णनमिदम् २ रयसमृद्धवताम् ३ वस्त्राणि ४ 'दन्तुर तुन्नतानतम्' इत्यमर ५ इय हि व्यस्तसमस्तजातिरत्युच्यते । तत्र व्यस्तपक्षे संस्कृते नोत्तराणि भापया च समस्तपक्ष उत्तरम् ६ ना, अच्, ई, । 'नाजी' इति भापाया निपेधवाचि

को भाति भूमिवलये विभवस्य भोक्ता
रोमाणि मित्र वद कोऽत्र लुनाति 'नायी'[1] ॥ ३१॥

आदाने विमृशन्ति धातुमिह कं धातुर्गतौ खेन कः
संबुद्धिं वद वेधसः शिति जनिस्थाने किमादिश्यते ।
दाने धातुमुशन्ति कं सति शरत्काले नदी कीदृशी
दृष्ट्वा नव्यवधूं युवा वदति किं 'लाडी मजादार या'[2] ॥३२॥

स्यात्किं कच्छतटीषु का पितृहिता धातुः प्रदानेऽस्तिकः
कं गायन्ति रघोः सुतं सुमतयः कः सिन्धुकन्यापतिः ।
तातस्ते क्व गतोऽधुना यदि वटो जानासि सत्यं वदे-
त्युक्तः पृच्छकमर्भको वदति किं 'वेतो[3] गया राजम.' ॥३३॥

धातुः को गतिगन्धयोः स्फुरति भोः कीदृग्विकल्पेऽव्ययं
वायुः कीदृगघं समाह्वय पुनः किं हौ परे स्यादटेः ।
संबोध्यो विधिरर्भकाः कृतहठा घाटच्छटां प्रेक्षितुं
किं प्राहुः पितुरग्रजं प्रति सखे 'वावा[4]चलो घाटम' ॥ ३४ ॥

कम्पी कोऽभिविधौ किमव्ययमिह क्वास्ते द्रवत्वं पुनः
स्याद्रूपं प्रथमाद्वितीयवचने किं वेः खमद्याह्वय ।
को धातुर्गतिगन्धयोर्द्रविणिनां किं याचते भिक्षुकः
प्रश्नानां द्रुतमुत्तराणि वद रे 'भैय्या[5] जलेवी खवा' ॥ ३५ ॥

श्रीमत्कुन्दननन्दनवैद्यश्रीकृष्णरामरचितायाम् ।
मुक्तकमुक्तावल्यां षष्ठः सर एष संपूर्णः ॥ ६ ॥

---

१. ना, (हे) अ, अयी 'शुभावहविधिविशिष्टः' । 'नायी' इति भाषायां नापितनाम. २. ला, डी, (हे) म, जा, दा, अरया 'वेगरहिता' । 'लाडी मजादार या' इति भाषाया 'कान्तेयमति सुन्दरी' इत्यर्थकम्. ३. वेतः, गया, 'तीर्थविशेषः' रा, अजम्, अ, । 'वेतो गया राजम.' इति भाषायां 'ते तु गताराजद्वारे' इत्यर्थकम्. ४. वा, वा, चलः, अघ, अट, (हे) म, । 'बाबा' हे पितामह 'चलो' चल 'घाटम' घाटाख्ये स्थानविशेषे. ५. मयी, आ, जले, वी, (हे) ख, वा, । 'भय्या' हे भ्रातः 'जलेवी' खाद्यविशेषम् 'खवा' खादयेत्यर्थः.

## ॥ अथ संकीर्णवस्तुवर्णनं नाम सप्तमः सर' ॥

तत्र वापीवर्णनम् ।

यादव्या शत्रुशल्यक्षितिपदयितया सम्मतिं तस्य लब्ध्वा
कोटाबुन्दीनगर्योर्व्यरचि पथि सुधास्वादुपानीयपूर्णा ।
तत्राद्यग्निश्वकर्मस्मयरयविजयस्फीतशिल्पच्छटाभि
सश्रीका मूर्तिमञ्जूपल्लवचितिभिर्दीर्घिकादीर्घिकाभि ॥ १ ॥

व्यावल्गद्वीचिविक्षालितविमलतलोत्तानसोपानपट्ट-
श्रेणीविश्रान्तशान्तश्रमपथिकघटापीतपानीयपूरा ।
आश्लिष्टप्रान्तभूमि स्फुटसुरभिसुमस्रग्धराभिर्लताभि
कीरश्रीस्तीरधीरध्वनितपटुपिका वापिका भाति कापि ॥ २ ॥

यामासाद्य तटस्फुटद्रुमघटासरुद्धचण्डातपा
मोदन्ते श्रमशुष्यदास्यकुहरा सतापभाजोऽध्वगा ।
सेय मन्दमरुद्विलोललहरीलालित्यलीलासमु-
च्छासा निर्जरदीर्घिकामलजला श्रीदीर्घिका दीर्घिका ॥ ३ ॥

अहो वापी कापि स्वजलमहिमापीडिततपा
मरन्दश्रीव्यापिस्फुटितकुसुमापीडसुभगा ।
प्रफुल्लद्रुच्छायाचटुलरुचयोऽस्या रतरय-
स्फुरद्यातायातैरुपचटकमश्नन्ति चटका ॥ ४ ॥

श्रीमच्छिलाफलककल्पितचारुतीरा
पीयूषविकृतिविडम्बगभीरनीरा ।
नाम्भोरुकीरकुलपक्षलसत्समीरा
वापी तृषार्तजनजीवनदानवीरा ॥ ५ ॥

---

१ [illegible] कोटानगराधिपमहिष्या । इद वापिकारत्न [illegible] [illegible] कारिता [illegible] २ [illegible] ३ [illegible]

[1]गंभीरनाभीरससंभृताशया प्रसादशीला कमलामलच्छविः ।
सुविभ्रमाढ्या कलकोकिलस्वना विशालवापी वनितेव शोभते ॥ ६ ॥

[2]त्वामुद्दिश्य मदुक्तिरिति शिशिरसलिलवति वापि ।
पुण्यलता परिपिच्यतां याद[3]ऽन्या भुवि कापि ॥ ७ ।

## अथ भङ्गावर्णनम् ।

लोचनविलोभनीया मधुराशनलालसा सरसा ।
स्मरकेलिकलाकुशला धूर्तवधूरिव विभाति धूर्तवधूः ॥ ८ ॥

प्रायः सुकृती पुरुषः स्वीकृतनिर्वाहको भवति ।
गौरीपतिरपि गिरिशो धूर्तवधूमेव संततं भुङ्क्ते ॥ ९ ॥

यो यत्समुपाश्रयते तदेव तं वस्तु किल मिलति ।
भजते यो धूर्तवधूं तं स्मरमिव मूर्तमेति धूर्तवधूः ॥ १० ॥

सहास्यरङ्गां मदमोहतुङ्गां विट्सारभङ्गां पृथुपित्तसङ्गाम् ।
उच्चैरनङ्गां हरिदङ्गरङ्गां क्षुधोत्तरङ्गां स्पृहयामि भङ्गाम् ॥ ११ ॥

भङ्गाम्भः पिबतो न शाम्यति विना दुग्धाभिषेकं क्षुधा
नेत्रं कोकनदायते निजमुखं दैन्येन नो दर्श्यते ।
शोकः क्वापि पलायते सदसि वाक् प्रागल्भ्यमालम्बते
मुक्तासारमिवोज्ज्वलं स्रवति भो मूत्रं मनो हृष्यति ॥ १२ ॥

सर्वं तुच्छं मनसि मनुते यत्प्रभावाद्दराको-
ऽप्युच्चैर्हर्षं प्रकटयति यः शोकजालं निरस्य ।
यत्प्राप्यः स्थिरयति मनो ध्यानमुद्रासु सोऽयं
संविद्वल्लीसलिलमहिमा शक्यते केन वक्तुम् ॥ १३ ॥

---

१. स्पष्टार्थकम्. २. दोहाच्छन्दः. ३. षष्ठ्यन्तमिदम् । हे वापि पुण्यलता त्वया परिपिच्यतामिति मदुक्तिरित्यन्वय. ४. स्वैरिणी. ५. धत्तूराङ्गना भङ्गेति यावत्. ६. कुलटां भङ्गां च. ७. वागाडम्बरमात्रमेतत्. ८. भागुरिमतेनात्र टाप्. ९. रावलोपनामकात्रत्यसामन्तविजयसिंहदत्तेनेयं समस्या पूरिता । भङ्गावल्ली ज्ञानवल्ली च.

विलसति तमालपत्रं नैवेद्यमिव जगदीशसबन्धि ।
यत्कणलिप्साग्रस्त त्रिजगद्धस्त प्रसारयाति ॥ १४ ॥

## अथ मत्तवर्णनम् ।

अस्तव्यस्तमितस्तत पथि पतन्मद्य मदादुद्धम-
न्हस्ताभ्या मुखमक्षिका' परिणुदन्गालीर्गदन्गद्गदम् ।
उत्तालै शिशुभिर्भृश वलयितो बीभत्समूर्तिर्महा-
न्मत्तो दक्षिणत क्षण क्षिप दृश मत्तोऽयमागच्छति ॥ १५ ॥

भ०भ०भो वव्रवारुणी भभभवान्कि वक्ति सस्सस्सखे
क्कोष्णीप ततते पुन पपपिव प्रेक्षस्व ख॰ख॰खगम् ।
इत्थ सप्रति गद्गदाक्षरममी मैरेयमत्ता मुहु
स्वच्छन्द प्रलपन्ति थूत्कृतिकणव्याकीर्णवक्त्रश्रिय ॥ १६ ॥

धूलीमुद्धूलयन्त पटुपटहपुटान्युद्धत वादयन्तो
यद्वा तद्वा वदन्तश्चटुलखुरखरीपृष्ठमारोहयन्त ।
जीर्णोपानद्भिरारादहह सवयस साधु नीराजयन्तो
व्यालोलं ग्रोमयाक्षस्रजमिह दधत पश्य वल्गन्ति पौरा ॥ १७ ॥

## अथ पक्वान्नवर्णनम् ।

मिष्ट नटीनामधरोष्ठवत्पर प्रवृद्धपीनस्तनवत्सुवर्तुलम् ।
स्नेहप्रगाढ सुहृदा चरित्रवच्छलत्यलं लोचनलोभि लड्डुकम् ॥ १८ ॥
सर्वाशन यत्पुरतो वराक प्राप्नोति यो भाग्यमृते सदा कम् ।
स्पर्धां विधत्ते मुधयापि साक सखे तमास्वादय दुग्धपाकम् ॥ १९ ॥
भुक्तापि वान्छा नहलीकरोति कान्त्याऽक्षिसौख्य दधती जनानाम् ।
समुन्मिषद्गन्धरमा नवीना वामोटिका स्त्रीव मुदे न कस्य ॥ २० ॥
वाह्लीकजीरार्द्रकलवङ्गसौरभास्तके निमग्ना जलयाविनेन्दव ।
जिह्वालताग्र वटका मनोहरा कल्लोलयन्ति त्रिदिवौकसामपि ॥ २१ ॥

---

१ इत पद्यत्रये स्वभावोक्तिवर्णनम् २ होलिकोत्सवव्यग्रपौरवर्णनमिदम्

सुरैः सदैव स्पृहणीयमुच्चैः प्रमोज्ज्वलं सारनिधानमेकम् ।
भिनत्ति दोषान्भजतां जनानां शक्रोपमं तक्रमुदाहरामि ॥ २२ ॥

अत्युज्ज्वलैरवयवैर्मृदुतां दधाना
भुक्ता बलं वितरति स्मरदानदक्षा ।
स्निग्धाशया गुरुगुणग्रथिता मनोज्ञा
फीणी नवीनललनेव मुदं ददाति ॥ २३ ॥

जलवलिवलयानि मौढपित्तक्षयानि
क्षतपवनभयानि प्रोल्लसद्विस्मयानि ।
मधुररसमयानि श्लाघनीयानि यानि
स्फुरदरुचिजयानि प्रेमतो वर्णयानि ॥ २४ ॥

धाराभिरुत्तमघृतस्य कृताभिषेका
गोधूमजा शरदखण्डितचन्द्रवृत्ता ।
सिद्धाढकीदलगुडप्रतिपूरितेयं
श्रीपोलिका जगति कस्य मुदं न धत्ते ॥ २५ ॥

संपक्कं मृदुवह्निना चणकजं चूर्णं समाने घृते
क्षेप्यं खण्डजकर्दमे द्विगुणिते स्थाल्यामिदं स्थापयेत् ।
कर्पूरत्रुटिकुङ्कुमैः कतलिकां कृत्वा शुभां भक्षये-
त्सैषा मानसमोहिनी बहुगुणा श्रीमोहनस्थालिका ॥ २६ ॥

## अथान्योक्तयः ।

यद्यपि बहवो विटपाः प्रसूनगुच्छच्छटाछुरिताः ।
तदपि त्वमेव दक्षश्चूतविटप मानमर्दने स्त्रीणाम् ॥ २७ ॥

दृष्टेऽपि मित्रे चेत्पद्मे मुखमुद्रणमापतत् ।
तदाऽस्य वसुवैयर्थ्यं को नाम निहानिष्यति ॥ २८ ॥

---

१. 'न तक्रदग्धाः प्रभवन्ति रोगाः' इति वैद्यकोक्तेः. २. आप—तत्, आपतत्, इति द्विधा छेदः. ३. द्रव्यं किरणाश्च.

विधुः सुधावन्दिरचन्द्रिकाचयैश्चकोरचञ्चूपुटमाशु पूरयेत् ।
परतु दैवान्मुदिरोऽन्तराभवन्नुणद्धि नून भवितव्यतेदृशी ॥ २९ ॥

प्रशस्य शिरसा भृतो यदि न हीरक त्व भ्रमा-
  द्विवेकविकलैर्गुणागुणविधौ किमेतावता ।
अंय गुणवशीकृतस्तव दिदृक्षया दूरत
  समेति भवता निज किमु न दर्शन दीयते ॥ ३० ॥

सन्मित्र वसुसतती समतया दृष्ट्वा किरन्त मुहु
  केपामाननमण्डलानि न मुदा मुञ्चन्ति मुद्रामिह ।
चेद्दोषातिविकाशिनो जलेजने कस्यापि नो मुद्रणा-
  भङ्गस्तर्हि स तस्य भाग्यविभवो नैतद्वसुव्यर्थता ॥ ३१ ॥

दोपोत्सारिणि धीप्रसारिणि महानैर्बल्यसहारिणि
  श्लेष्मच्छेदिनि वातभेदिनि भृश भग्नास्थिसमेलिनि ।
रक्तोद्रेकिणि पित्तहेलिनि लवावप्यौपधीना गुरौ
  दुर्गन्ध सुगुणे किमत्र लशुने धातस्त्वया स्थापित ॥ ३२ ॥

देवाज्ञामधिगम्य शब्दरचना कर्णप्रिया कुर्वतो
  दूराद्वीक्ष्य तवोन्नतिं वितरत सञ्जीवनानि क्षितौ ।
सतोपेण वशीकृतो द्विजशिशु प्राप्तोऽस्म्यनन्याश्रय
  स्वल्प याचितुमब्द विज्ञ मयि किं कार्पण्यमालम्बसे ॥ ३३ ॥

श्रुत्वा चूत तव श्रिय नु विधृतो जम्बा रुपा कालिमा
  कालिङ्ग त्रपयेव लीनमवनौ दीर्णं शुचा दाडिमम् ।
मृद्वीका मृदुता दधार पनस रोमाञ्चित भीतित
  सतापाद्धिव नालिकेरजठरे जात जलाना भरः ॥ ३४ ॥

आख्यास्त्वदीया रुचिरार्थपोपा गायन्ति कोशाग्निरता सतोपा ।
परतु पुण्यैरिह हर्पधाम प्राप्त त्वया मप्रति नूननाम ॥ ३५ ।

---

१ कश्चित्पुरुष २ सूर्ये सुहृद च ३ भमरस्य पुष्पस्य च दोषाशब्द श्लिष्ट. ४ धातको विधकृत्

अथ वैद्यवर्णनम् ।

श्रुत्वा धुनोति न शिरस्ताँस्तान्विश्वागुणान्नरः ।
गतादिवर्णो विश्वैव स साक्षाद्विबुधैः स्मृतः ॥ ३६ ॥
नारायणगजरम्भाप्रथमाक्षरनिर्मितं किमपि ।
भार्ये भेषजरत्नं कथितं श्वासव्यथाध्वंसि ॥ ३७ ॥
दयिताधरपीयूषं पित्तज्वरनाशके जयति ।
यदितरभेषजकरणं सति नूतफलेऽम्लिकाग्रहणम् ॥ ३८ ॥

गीतम् ।

पातयसि मां प्रति किं नयने वचो मे शृणु पङ्कजनयने ॥ ध्रु० ॥
महौषधमलयजजलसहितः कषायः किल पर्पटविहितः ।
ज्वरं क्षिपतितरामतिविकटं हरिः सहसैव यथा शकटम् ॥
रात्रौ पात्रे प्लावितं धान्यकमपतुषचारु ।
सितया युतमतिसितया निगदितमिदमतिहिमगुणचारु ॥
चारुमुखि पित्तदवथुदलने पातयसि मां प्रति किं नयने ॥ ३९ ॥
सदागतिदरतरलितकमलां तटीगतविहगोत्तमविमलाम् ।
भजतु विजयार्थं दवथुरुजः प्रियासहितः सरसीं मनुजः ॥
क्लिष्टैरन्यैरौषधैरिह किं कुन्दसुदन्ति ।
पुरुपित्तजमपि दवथुं जितमिव ते हृदि कलयन्ति ॥
यन्ति ये सुखमम्बुजशयने पातयसि मां प्रति किं नयने ॥ ४० ॥
त्वमसि यदि युक्ता गदपतिना विषमेण धातुकृतस्थितिना ।
शिवामृतलतिकाम्बुदमधुना सृतं पिब तन्वि युतं मधुना ॥
विद्धद्वौरि श्रूयतामतिविषमज्वरहारि ।
यवनिम्बकुलकबृहतीयुतमथ विधिसृतममृतजवारि ॥
वारिधरसहचरसुरुदहने पातयसि मां प्रति किं नयने ॥ ४१ ॥
उमापतितुष्टिकरं हवनं सदा गददुःखयुजामवनम् ।
गुरुद्विजपदपङ्कजनमनं बुधैः स्मृतमखिलज्वरशमनम् ॥

---

१. वायुः. २. ज्वरेण.

परिमुक्तानि विदूषणै श्रीकृष्णोक्तपदानि ।
स्थितिमिह विदधतु नित्य निन्दितपीयूषाण्यसमानि ॥
मानवति पण्डितजनवदने पातयसि मा प्रति किं नयने ॥ ४२ ॥

श्रीह्विक्टोर्यावर्णनम् ।

नासीररणिततूर्या द्युतिजितसूर्या गुणौघचातुर्या ।
सङ्ग्रामभुवि कटुर्या जगता धुर्या विभाति विक्टुर्या ॥ ४३ ॥

वरामारोढुर्या द्युतिविजितसूर्या वलहत-
द्विपच्छ्रेणीपूर्या वितरणपटुर्याचकततौ ।
उदञ्चच्चातुर्या रणरणिततूर्या भटगणै
स्तुता तिग्मच्छुर्यो गतिषु विक्टुर्या विजयते ॥ ४४ ॥

श्रीमत्कीर्तिविहारिणी गुणिगणप्रौढापदा वारिणी
मित्राणामुपकारिणी रिपुकुलस्तोमस्य सहारिणी ।
आक्रम्याद्भुतचक्रवर्तिपदवीलक्ष्मी स्थिता श्रीमहा-
राज्ञी सा चिरजीविनी विजयतामाशी प्रभावान्मम ॥ ४५ ॥

कृता ययाज्ञा नृपचक्रवर्तिनी महासमृद्धि कविचक्रवर्तिनी ।
तथा पुनर्भी रिपुचक्रवर्तिनी चिराय सा चक्षतु चक्रवर्तिनी ॥ ४६ ॥

फिरङ्ग सत्सङ्गस्फुटगुणतरङ्ग स्यदचल-
तुरङ्ग सारङ्गक्षुभितरणरङ्गक्षितिनट ।
अनङ्गस्फीताङ्ग कृतरिपुविभङ्ग स्वमहसा
पतङ्गप्रोत्तुङ्ग स्फुरति वरवङ्गस्थिरपद ॥ ४७ ॥

रेलशकटी ।

श्रीराद्यै किमु दत्तवान्करतया शक्रो विमानावलिं
किं वा दग्निपयीभवन्मरुदय वेगान्मुहुर्धावति ।

१ पू—येति च्छेद २ तीक्ष्णासिपुत्र्या गतिषु स्तुतेत्यन्वय ३ श्रेष्ठे वङ्गदेशे स्थिर पद 'कटकत्ताख्य' स्थान यस्य । भारते वपेङ्गरेजानां प्रथम तत्रैव स्थितिरभूदिति यौगिकम्

हित्वा किं नु निजां मनोभिरणुतामुच्चैर्महत्त्वं धृतं
शक्तिर्वा गरुडस्य रेलशकटीव्याजाद्भुवि क्रीडति ॥ ४८ ॥
श्रीराज्ञ्या परिजित्य वाहनतया तोयानलौ योजितौ
धूमो भग्भगिति ध्वनँस्त्वरयते यत्र स्वयं सारथिः ।
धावत्येकदिनेन योजनशतं या भारमुद्बिभ्रती
सेयं केन विचित्ररेलशकटी संश्लाघितुं शक्यते ॥ ४९ ॥
त्रिविक्रममनस्त्रपां विदधती हसन्ती रवे-
र्हयानपि रयात्तिरस्कृतवती वटीं पारदीम् ।
जगत्त्रयविलक्षणाऽखिलफिरङ्गसिद्धिः स्वयं
कलेवरधरेव रेलशकटी परं खेलति ॥ ५० ॥
वैलिष्ठौ[1] नो धुर्यावथ न युगवार्ताऽपि विदिता
न वा दृष्टं वल्गाप्रमुखमितरत्साधनमपि ।
फिरङ्गाणां धावत्याति तदपि सा रेलशकटी
क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥ ५१ ॥
कुर्वाणा पथि पृष्ठतः पवनमप्युत्कम्पयन्ती मनः
पक्षीन्द्रस्य हनूमतो विदधती धिक्कारदिग्धां गतिम् ।
स्फीता व्योम्नि विमानसंततिरिव क्षोण्यां फिरङ्गैः कृता
वेगाद्धावति पश्य रेलशकटी प्रायः पिबन्ती दिशम् ॥ ५२ ॥
अयि पश्य रेलशकटी चीत्कृतिमातन्वती विकटाम् ।
पृथिवीं प्रकम्पयन्ती धावति मदमत्तकारिणीव[3] ॥ ५३ ॥

तारः ।

स्तम्भस्थापितभारस्ताम्रमुखाणां विलक्षणश्चारः ।
विलसति वितताकारः स्फारस्तारैः[4] प्रकामविस्तारः ॥ ५४ ॥

---

१. अत्र यतिभङ्गोऽनुप्रासव्यसनितया 'निराधारो हारोदिमि कथय केषामिह पुरः' इतिवत्कृत. सोढव्य. २. समस्यापूरणमिदम्. ३. एतयोपमया करिणीमदस्य स्वकुलनाशकारणोत्पातश्रुतेश्च रेलशकट्या वाहनविशेषत्वेनेतरवाहनानां वृषशकट्यादीनामिदानीं नाशोऽभूदिति व्यज्यते. ४. तारो नाम दूरदेशस्थवृत्तान्तस्य झटिति प्रापको यन्त्रविशेषः.

## अथ दाडिमवर्णनम् ।

चञ्चत्स्वादुरसं सुधावदबलावक्षोजवद्वर्तुलं
प्रोन्मीलद्रसनाविलासललितं सिमन्तिनीश्रोणिवत् ।
अन्तःसंभृतपद्मरागवदवत्सारश्रिया सुन्दरं
स्फीतं सज्जनचित्तवत्परिणतं श्रीदाडिमं मारवम् ॥ ९५ ॥
कान्तापीनकुचप्रसिद्धमहिमप्रोद्दामपाटच्चरं
माधुर्योत्कविकृष्णरामकवितास्पर्धाविधानोद्धुरम् ।
पाकप्रस्फुटितान्तरान्तरलसन्माणिक्यबीजोज्ज्वलं
केषां न स्पृहणीयमत्र जगति श्रीदाडिमं मारवम् ॥ ९६ ॥
प्रसद्भिरिव काञ्चनच्छदमदं स्ववल्कत्विषा
हसद्भिरिव सन्मणीन्विमलबीजपुञ्जश्रिया ।
स्रवद्भिरिव संततं रससुधाझरीसीकरा-
न्महद्भिरवकृष्यते मम मनो मरोर्दाडिमैः ॥ ९७ ॥
लोकोत्तररसविहसितपीयूषमहासमृद्धिविभवानि ।
मरुविरहजदुःखादिव विदीर्णहृदयानि दाडिमफलानि ॥ ९८ ॥

## अथ प्रकीर्णकानि ।

### तत्र नटी ।

वंशं निखातमवनौ दृढबद्धरज्जु-
मारुह्य संप्रति नटी विगतभयासा ।
ऊर्ध्वं निलिम्पललनेव विभाव्यमाना
निःशङ्कमुद्भ्रमति चक्रवदन्तरिक्षे ॥ ९९ ॥

### अथ हस्ती ।

सैरीऽमादाय करेण धूलिं निमीलिताक्षं निकिरन्समन्तात् ।
मदोद्धतः फाल्गुनकेलिमारात्परिभ्रमन्नम्यमतीव हस्ती ॥ ६० ॥

---

१ मरुदेशभवम्. २ अप्सरस इव. ३ इत पद्यद्वये स्वभावोक्तिरलंकार उत्प्रेक्षा च.

शुण्डाग्रेण रदं शनैः परिमृशन्पुच्छाग्रमुच्छालय-
न्दानैः पङ्किलयन्स्वकीयसरणिं मेहन्मुहुर्बिन्दुशः ।
चीत्कुर्वन्घनशृङ्खला मुखरयन्टंकारयन्घण्टिकां
कुम्भीन्द्रो मदमुद्रिताक्षमधुना धुन्वञ्शिरो धावति ॥ ६१ ॥

अथ समप्रश्नोत्तराणि ।

[1]काव्याकुलिता माद्यति काञ्चन मुद्रां मनोरमामाहुः ।
इह काऽलिकावतंसितचन्द्रकला कामिता योग्या ॥ ६२ ॥
[2]पृच्छामि कोऽपकारी दुःसाध्या कामलाधिका पीडा ।
काचविभूषाऽल्पधना परिणामे ना कमभिलषति ॥ ६३ ॥
[3]दशमुखगुप्ताऽलङ्का ग्रीष्मे कासारकेलिरुद्दिष्टा ।
कासाऽर्तिः स्यति वृद्धं कः स्रष्टा केकिनः शरदि ॥ ६४ ॥

अथ व्यतिरेकविशेषविच्छित्तिः ।

स्फूर्तिविशेषं दधतः परलोकभयं प्रसह्य संहरतः ।
भेदं परमाकारमृते न वेद्मि शस्त्रस्य शास्त्रस्य ॥ ६५ ॥
रोमाञ्चमङ्कुरयतां समधिकमाश्लिष्यतां मुहू रहसि ।
दाराणां च दराणामाकारमृते न वेद्मि वैधर्म्यम् ॥ ६६ ॥
अपि संभृतस्य सततं रिक्तत्वं बिभ्रतो विसर्जनतः ।
उदरस्योदारस्य च केवलमाकारतो भेदः ॥ ६७ ॥
दुर्बलजनपाणितलं प्राप्य स्थेमानमुज्झतां सहसा ।
दाराणां भाराणां परमाहुर्भेदकं [4]दम्भम् ॥ ६८ ॥
विजयपराक्रमसारं विस्फुरदुत्साहवृत्तिविस्फारम् ।
प्रधनं पुनः प्रधानं परमाहुर्भिन्नमाकारात् ॥ ६९ ॥

---

१. का—व्याकुलिता, काव्याकुलिता. कांचन कांचित् मुद्राम्, काञ्चनमुद्राम्. का अलिकावतंसितचन्द्रकला, कालिका. का मिता परिमिता, कामिना कामुकत्वम्. २. कः अपकारी, कोपकारी. का पीडा मलाधिका, कामलाधिका. कामला रोगविशेषः. च पुनः का विभूषा, काचविभूषा. ना पुरुषः कम्, नाकम्. ३. का अलमत्यर्थम्, लङ्का. का सारकेलिरुत्तमक्रीडा, कासारकेलिः सरःक्रीडा. सा का आर्तिः पीडा, कासार्तिः. कासो रोगः. कः स्रष्टा, को ब्रह्मा. के अकिनो दुःखिनः, केकिनो मयूराः. ४. दकारं भकारं चेत्यर्थः.

## अथ सामान्यवर्णनम् ।

त्वद्गुणाश्रयेण पुरुषा पुरुषोत्तमपलि मन्ददृष्टहस ।
यच्चन्द्रचन्द्रिकाढ्येऽप्यध्वानि विचरन्ति दीपिकोद्द्योतै ॥ ७० ॥

मूक प्रागद्य वाग्मी पदमपि चलितु नो पटुर्यासि पद्भ्या
प्राप्ताँस्त्व प्रेक्षमाण प्रणमसि तदह वेद्मि वीत तवान्ध्यम् ।
सोऽन्नद्वेषोऽपि नष्ट श्रवणमुदयते हन्त चाधिर्यबाधा-
द्दिष्टया सन्मित्र जाता तव विभवमहासन्निपाताद्विमुक्ति ७१

मूक पूर्वमभू सखे त्वमधुना वाग्जालमालम्बसे
चक्षुर्गाढनिमीलित तव पुनर्दिष्टया समुन्मीलितम् ।
सद्भोज्ये रुचिरस्तमाप सहसा जातो बुभुक्षोदयो
दृष्ट्वा ध्वस्तगद भवन्तमभितो जाता प्रसन्ना वयम् ॥ ७२ ॥

वलिना कलिना कवलितमन्त करण कृपालूनाम् ।
रक्ष्या ये द्विजदक्षास्ते किल भक्ष्या बभूवुरिह राज्ञाम् ॥ ७३ ॥

तृणेनापि बुधा वैर नोचित धीरिय मम ।
यतस्तदेव लग्न सदक्षिण काणत्वमावहेत् ॥ ७४ ॥

विद्याविवेकविशदीभवदाशयाना
मीत्या रिपोरपि गुणान्गृणता सभासु ।
आकाशपुष्पसदृश लघु कारण चे-
च्चेत सता कलुपयेदचिकित्स्यमेतत् ॥ ७५ ॥

प्राचा भूमिभुजा विचित्रचरित वाचा न मे गोचरो
येषा ब्रह्मकुले नतिर्युधि परान्नुद्दिश्य शौर्यक्रम ।
अर्वाचीननृपा नपुसकतया शान्तस्वभावा नम-
स्कुर्वन्तोऽधिरण परान्मकृतिषु स्व पौरुष तन्वते ॥ ७६ ॥

प्रभूतान्महोत्रे निनयजाति भूताविपजपा-
न्प्रभूतास्त्रैर्दीनद्रुहि जनितलूताविकद्वान् ।

रंजः[1]पूतानाजावरिभुजाविधूतासुघटना—
नजः[2] पूतामुच्चैर्गतिमनभिभूतां गमयति ॥ ७७ ॥
निर्वाहानुगुणं निषेधभयतो भिक्षुर्मनाग्याचते
प्रीत्या पूरयति द्रुतं तदधिकं दाता यशोलब्धये ।
स्वल्पं वाञ्छति चातको निजतृषासंक्षोददक्षं जलं
जीमूतस्तु मुदा ददाति मुशलाकाराम्बुधाराः परम् ॥ ७८ ॥
यत्सर्वत्र महर्घता प्रकटिता मुक्तामणीनां तथा
यच्चाकारि समर्घता तृणपयोधान्यादिकानामिह ।
तज्जाने जगदीश्वरेण विभुना दीनाननुध्यायता
स्वास्मिन्दीनदयालुता समधिकं लोकोत्तरा दर्शिता ॥ ७९ ॥
तत्किं नु युक्तं ददति द्विजेभ्यो वित्तानि रक्षादिवसे महान्तः ।
कपर्दिकां कुत्रचिदप्यनुज्झन्भवान्यथार्थं तदहः करोति ॥ ८० ॥
भोजाद्याः क्षितिपा यशःकृत इह स्वीयामपीमां श्रियं
भोगार्थं विबुधव्रजाय यददुस्तेषामयोग्यं हि तत् ।
रुद्ध्वा कोशगृहे स्वभावचपलां तां यद्धराधीश्वरा
रक्षन्त्याधुनिकाः सखे तदुचितं कोऽस्त्यत्र ते संशयः ॥ ८१ ॥
येषां स्फीतपराक्रमध्वनि[3]रनुप्रासा[4] महाशक्तयो[5]
भासन्तेऽन्तिकमर्थकोश[6]निचयाः श्रीदुर्ग[7]बन्धादयः ।
वीरेन्द्रैरपि वन्दिताः कविनृपाश्चेत्कोपिताः केनचि-
त्तस्य ध्वंसकृते कुकीर्तिकटकं संयोज्य ते शेरते ॥ ८२ ॥
दूरादेव नमस्करोति कलयन्नुत्थानमेकः सदा
क्रोधाक्रान्त इवापरः प्रकुरुते नो संमुखं स्वं मुखम् ।
एकः पृच्छति संशयं सविनयं त्वाशङ्कतेऽन्योऽन्यथा
किं पूर्वस्य परस्य वा वद परा प्रीतिर्न जाने द्वयोः ॥ ८३ ॥

---

१. क्षत्रियविशेषान्. २. अजः परमेश्वरः. ३. उत्तमकाव्यं सिंहनादश्च. ४. अनुप्रासोऽलंकारोऽस्त्रविशेषश्च. ५. अभिधा सामर्थ्यं च. ६. अमरकोशादिसंग्रहो भाण्डारगृहं च. ७. चित्राणि दुर्गमस्थानानि च.

## शान्तप्रकरणम् ।

मामीक्षमाणानि जगन्ति यान्ति प्रयाम्यहं तानि निरीक्षमाण ।
स्थितोऽस्मि तावत्परलोकमार्गे किमत्र शोचामि कृतप्रयाणान् ॥ ८४ ॥

यमत्रासो यस्यास्त्यतिचलतया मर्कटमय
कमत्राहो नैव व्ययति जवो दु खगमक ।
नमस्तस्मै कुर्मो धृतमतिशमे येन हि मन–
स्तम पार प्राप्तो जगति स मुनीनामपि मत ॥ ८५ ॥

दमध्वस कृत्वा क्रियत इह येनेन्द्रियमद–
स्तम प्राप्तौ हेतुर्यदकुनिसर कस्य न मत ।
ममत्वावर्ते यत्क्षिपति नहि क वीरिति मम
नमस्तस्मै कुर्मो धृतमतिशमे येन हि मन ॥ ८६ ॥

प्रकाम कामान्ध कलयसि कुकामान्मनसि किं
व्यथा नो का कामारचयति च वामाधरसुधा ।
न काम्या कामोपि प्रकटयति कामान्परिणता–
वरे निष्काम स्वे स्थिरय हृदि कामान्तकमत ॥ ८७ ॥

सुकाया नो जाया न वसु न सहाया न तनया–
स्त्वया साक हा यास्यति सपदि वायावभिगते ।
अपायात्त्वा पायात्क इह वद मोया पतिमृते
कैं वा मा या माया त्यज किमिह दायादकलहै ॥ ८८ ॥

न माता न भ्राता सुखमिह विधाता मम पुन–
श्च्युतिर्याताया ताज्जगति विततातापिनि नहि ।
भवान्पाता पातादमितशुभदाताऽविकमतो
रतिर्जाताऽरातावरह कुशतातापि कुटिले ॥ ८९ ॥

---

१ अत्र पद्ये प्रतिपादमाद्यन्तयोर्वर्णद्वयस्य व्यत्ययोऽपि निरूप्यो द्रष्टव्य यस्य मनस तदित्यध्याहार्यम् एवमग्रिमपद्येपि २ दृष्टो ३ निजम् ४ दृष्ट्या ५ कृत्वा कापीनर्थं ६ मा या मा गच्छ ७ हे कुशतात श्रीरामचन्द्र कुटिलेप्यराती रतिर्जातेत्यन्वय .

स्मृतं न श्रीविष्णोर्मनसि चरणं मोहहरणं
रणे हित्वा प्राणानपि न कलिता नाकपद्वी ।
निशि श्यामापीनस्तनपरिसरं नापि मृदितं
वयं मातुः क्लेशे दृढपरिकराः केवलमहो ॥ ९० ॥

संसारं सततं विचारय वधूसारं न सारं सगे
स्मारं स्मारशरार्त मा पुनरपस्मारं समारम्भय ।
स्वान्ते श्रीपुरुषोत्तमं कुरु न चेत्स्वान्ते कृतान्तेक्षितः
कां कां नो नरकार्तिमेष्यसि विपन्मग्नो विभग्नोद्यमः ॥ ९१ ॥

श्रीमत्कुन्दननन्दनवैद्यश्रीकृष्णरामरचितायाम् ।
मुक्तकमुक्तावल्यां सप्तमसर एष संपूर्णः ॥ ७ ॥

---

## ॥ अथ भाषाचित्रं नाम ललन्तिका ॥

प्रभातवेला वहिलो उठीने सदा तमारूं महिमा विचारूं ।
**धनुर्धरी** मा तमथी विनंती कल्याण नक्की करिजे हमारूं ॥ १ ॥

### दोहा ।

जयपुरको बाजार यह चोपरसम सरसात ।
इहि केतीं अभिसारिका ह्वै ह्वै मिल दरसात ॥ २ ॥

केहु दरसति घृतपूर वहु कहु वरसति जलपूर ।
सरसति मनसिज रंग हिय तरसति सज्जन दूर ॥ ३ ॥

हवामहल यह सहलको हवा चहल नृपकीन्ह ।
तकि जाकी कारीगरी मय मन विस्मय लीन्ह ॥ ४ ॥

### आर्या ।

साँच कहूं ओर कहूं महलात नहीं हवामहलकीसी ।
छतरी विच जाली जिह धुनी सुनावत हवाम हलकीसी ॥ ५ ॥

---

१. हे स्मारशरार्त स्मारमपस्मारं मा समारम्भयेत्यन्वयः. २. चित्ते. ३. स्वावसाने सति. ४. इदं च प्रकरणं कविना स्वकृतभाषानेकपद्येभ्योऽवकृष्य नानाविच्छित्तिशालीनि कतिचित्पद्यानि संस्कृतभाषोभयज्ञसहृदयहृदयाह्लादाय ललन्तिकात्वेन प्रकल्प्य संयोजितम्, तत्र कचित्कचिट्टिप्पणीमन्तरा कव्यभिप्रायस्यास्फुटत्वात्सा प्रकाश्यते. ५. श्रावणतृतीयोत्सववर्णनमिदम्. ६. घेवर इति प्र० भोज्यविशेषः. ७. यमकमंत्रालंकारः.

सातगन एक गुरु पुनि विखम ज नहि ओ छटे जगन नल वा ।
एसैंही उत्तरदल रचो छटे थान एक ल वा ॥ ६ ॥
मिलत जहा ग्राहककों मनमानी वस्तु उवरीसी ।
जयनगर जुरति गुदरी गुरुगोरखनाथगुदरीसी ॥ ७ ॥
करवाचोथ भईरी तुझे जरूर करवा लेना ।
लेना न कछू देना नजार जार करवा लेना ॥ ८ ॥
बाँजत डफ फागिफई निहार दिल्दार रगको लहरो ।
फैलत गुलाल लाली गगन गुलाली भयो गहरो ॥ ९ ॥

## वैताला ।

विपमजु पटही कला करो सम वसु ता सव ना लघू भरो ।
समपरते ना वरो मिला वेताला रल ओ गुरू भला ॥ १० ॥
सेघन घननकी घटा जुटी ता बिच बिजुरीकी च्छटा छुटी ।
बनवेलिनकी लचालची लसत मयूरनकी नचानची ॥ ११ ॥

## श्लोकाः ।

ईप पश्य यवनीनवनीवि सममर्द मदमुग्धमुखश्री ।
प्रत्युवाच यवनी कुपितेव 'चलुबे दुग न दे मुझकों तू' ॥ १२ ॥
ज्वरार्दिता या कटुकान्कषायान्नेचेतिपिबेत्कि वद वैद्य देयम् ।
निवोध हसीमधुरप्रचारे 'वहा वनपूशाशरबतपिलावे' ॥ १३ ॥
पित्ततापितशरीरवल्लरी सा सखी वद 'हकीम दवाई' ।
औपध शृणु मृगमाक्षि मनोज्ञ 'जा गुलानगुलकद खवादे' ॥ १४ ॥

---

१ आर्यालक्षणमिदम् २ नवार्थय गाथा, तत्र कार्तिककृष्णचतुर्थी 'करवाचतुर्थी' इत्युच्यते, तत्र जारिणमुखीं प्रति वक्ति, तत्र 'करवा' इति 'जार' इति 'नजार' इति च शब्दा श्लिष्टा, 'लेना न' 'कछू देना' इति 'लेना' 'न कछू देना' इत्यादि भङ्ग्यन्तरेण च योजना, एवं वक्तृबोद्धव्यवैशिष्ट्यादिना अनेकेऽर्था उन्नेया, यमकानुप्रासालङ्कारौ ३ होलिकोत्सववर्णनम् ४ वैतालीयम् ५ वर्षावर्णनम् ६ मिश्रजातिरियम् ७ इदं वैद्यकप्रकरणम् तत्र 'वनपूशा' इत्यार्योपघातप्रतिपादनेन पर्यायान्तरेण विद्याभिज्ञत्वमपि द्योत्यते.

हा हन्त किं त्वमसि सुन्दरि दुःखितेव
सा क्लिश्यते मम सखी वद किं हि तस्याः ।
अम्लोर्ध्ववायुरपि वैद्य न पच्यतेऽन्नं
'देना गुलावजलसङ्ग सिकंजवीना' ॥ १५ ॥

नयनचुलुकनीये तानि पेयानि पुंसा
ज्वररयरुजि चत्वार्योपधानि प्रपाच्य ।
रसिक कथय तेषां नामधेयानि मह्यं
शृणु शशिमुखि 'मिश्री सोंफ मक्को वनपूशा' ॥ १६ ॥

फलेर्हो रूपं किं भवति भुवि धातुः कथय क-
स्तथा कीदृग्धातुः समधिकतया रक्षणपरः ।
विलोलाक्षि स्यात्का जठरदहनोद्बोधचतुरा
भिषग्वर्यं प्राणप्रिय शृणु 'फलोस्पोत्तरमिदम्' ॥ १७ ॥

घनासा चोमासा घनवनवटा सावनघुटी
हरासा ये घासा वनविच भरासा गुथरहा ।
जवासाका रासा जलकर जरासा रहगया
तमासा हे खासा त्रिभुवनपिपासा मिटगई ॥ १८ ॥

दृष्ट्वा कामपि तुन्नवायवनितां ताम्बूलरागाधरां
साकूतं निजगाद 'दर्जन सुही चाहे सुही लीजिये' ।
सर्वाङ्गस्फुटयौवने स्पृहयति त्वत्सेवनं मे मनः-
प्रोत्तिष्ठ त्वरितं प्रसीद 'हमरे सीने क लागो जरा' ॥ १९ ॥

अन्यां कामपि तुन्नवायवनितां मातङ्गकुम्भस्तनीं
दृष्ट्वा सस्मितमाह 'जान तुमरी काहेकि ये अंगिया ।
निघ्नन्ती नितरां कटाक्षविशिखैः सा वाग्विदग्धा पुनः
साभिप्रायमुवाच 'हात धरिकें सीनेप मलमल्सही' ॥ २० ॥

---

१. फल, अस्, पा, इति व्यस्तोत्तराणि. 'फलास्पा' इत्यवलेहविशेष इति समस्तोत्तरम्. २. वर्षावर्णनम्. तत्र तृतीयपादे पदच्छेदविशेषेऽस्ति काचिच्चमत्कृतिः. ३. भाषांशे श्लिष्टमिदम्. ४. इदमपि.

यौटोद्यानमह कदाचिदगम 'बाहर्हवा के लिये'
काचित्तत्र कुरङ्गलोलनयना 'दिल्दार मालिन्मिली' ।
मद्वाक्य वनपालिके शृणु मना 'क्नें तु देगी मुझे'
सेत्युक्ताह न तानि मे त्वमधुना 'मर्वा जरा लीजिये' ॥२१॥

हैट्टे कुत्रचिदीक्षित पथि मया 'नद्दाफ लौडा सजा'
कृत्वा कज्जलरेखिका नयनयो'र्मुंहेप बेठा हुवा' ।
सर्वानेव विमोहयन्स्मितरुचा 'गालोंकु त्यारी करे'
हहो किं कथयामि मित्र शृणुरे 'वेचे सुने खूब्रुई' ॥ २२ ॥

बेठी बाल अटानमे खिचरहे पखा झपट्टानमे
मोती केशघटानमे लसतहे लाली दुपट्टानमे ।
लागी खेल बटानमे मदछके नैना सपट्टानमे
पागी प्रीत पठानमे हमि सखी टौरे लपट्टानमे ॥ २३ ॥

मिश्री लेकरि वशलोचन नयो तामे जरा डारिकें
भगाको घृत दे गुलाबदल ओ एला मिलादीजिये ।
पीछे पात्रविषे पचीसदिनलों नीके जमाकीजिये
लीजे ये गुलकद फेर झगरो कीजे कलाकदते ॥ २४ ॥

चीनीके बुरजा नजीक बरजा तोहू जरा ना चिगा
मालादार दले दले करि चला भाला भला दे भगा ।
पीरा पाकरि सूडि धूनि मकुना हाती सिताबी दगा
मारा जात जवान जो जउदही दूजा न लेवे लगा ॥ २५ ॥

कुजाबजरवह्वानचरसी कोकाट भारी भरा
माला ह्यावतने बरावर दिया तोहू न पाछा फिरा ।
एसा रोस धरा कि पावनजरा जजीर जगी तुरा
हाती सर्फटि सूडिमो पकरिके घोराप मोरा करा ॥ २६ ॥

---

१ इदमपि तथैव २ इदमपि भाषाचित्रम् ३ मादकाद्रव्यवर्णनमिदम्
४ जयपुरीयराजधानीयमामत्ततारगौकुक्समामीयवर्णनमिदम् एवमुत्तरपद्य च

जादा जोर मिजाज तेज जगमे जीवन् जुलुम् हाजमा
जाके काज जना जना जतनसें जूझे अर्जी दीजिये ।
जा बाजार जहां जह्लार जडते जोरी मजेसे सजे
ताजा खोज जरा जरूर जरदा जाना मुझे जाजरू ॥ २७ ॥
हं बाजार गये वहां नहि सहे रंडीनिजारे भये
देखी यार वहार पार नहिरे दीदारही सारहे ।
चौरेदार सवार चार चलते धं आपडे वापडे
हम् हुश्यार करार प्यार करिकें ह्यां आरहे वे रहे ॥ २८ ॥
आया दस्त दुरस्त चुस्त खुलिके हम्मस्त वो भिस्तभी
क्याहे वस्तु गुजिस्त किस्त नतकी सब्गस्त अब् अस्त हे ।
गम्की रस्त समस्त सुस्त दिल ये हस्ताह रस्ता खुला
लेकिन् गोस्तम दोस्त उस्तरि गही पिस्ताव हे इस्तरै ॥ २९ ॥
गौरी गावत गीत रंग रसकी होरी मजेकी मची
झोरी बीच गुलाल लेकरि चली तारीद हा हा नची ।
मारी घूंघटपे जवान जलदी ले रंगकी डोलची
लाली केवल नैन नाहि गहरी लाली कलेजे जची ॥ ३० ॥
होरीकी तजवीज बीचि प्रियकें एसे मजेकी तुली
गोरीकी छतियां छुई सहचरी हासीक मारी डुली ।
नीवी गांठिहु नाहि केवल खुली काहू दिनाकी घुली
जोथी अंदर रंजगाठि गहरी सोहू सितावी खुली ॥ ३१ ॥
होरी फाग फई बजे ढफ सही गोरी नची हे यहीं
भारी रंगनदी वही बहुतही आकाशलाली छही ।
नैना प्रीति गही जरा छल नही चूवे जु सारी मही
हांसी होय रही रती प्रियचही तारीख सांची कही ॥ ३२ ॥

---

१. तमाखूवर्णनम्, मित्रं प्रति मित्रस्योक्तिः. २. अनुप्रासस्य परा कोटिः, मित्रस्योक्तिः. ३. इतस्त्रिभिः पद्यैर्होलाखेलवर्णनम्. बन्धस्य श्लिष्टतया चमत्कारः.

राधानागर[1] नेहसामर महा गोविंद माधो हॅरी
गोपीकात कृपाकटाच्छ करि तें कुब्जाहु कब्जे करी ।
केतीं मञ्जु निकुज मे व्रजवधूकदर्प पीरा हरी
मेरी बेर कहोजु कारन कहा जो बेर एती करी ॥ ३३ ॥

## कवित्त[2] ।

माधवधराधवके प्रबल प्रयान होत तुरग तयार होत पौंन पदपातमे
कुजर चलान होत नाद होत बीरनको रजको बितान होत जेसे तम रातमे ।
कह कविरॉम[4] ओरि कालीकें सुकाल होत मुडनको माल होत हरजूके हातमे
रिपुकुल हारे जात जिनघर जारे जात पकरनिकारे जात ओरही बिलात मे ॥ ३४ ॥

सेवाके समय सगि जिनहू के सीस झुकी तिनपें तरी दरसे रसकी गहर हे
बिबुधसमाजमाझि कुजर तुरग लच्छी प्रल निकिरत रत्न आठाही पहर हे ।
राम गुनसमीरकी झुकि झोर पायि नित्त बितरत बित्त जोंलों जाचक चह रहे
दीन दव हरबेकों सपतनहर मानों माधवमहर दरयावकी लहर हे ॥ ३५ ॥

तोयें लखि गच्छ छिप्यो मच्छरजों मच्छकेतु काजपे अल्हिभुज जों मजुमुख मुच्छ हे
प्रतिच्छन बिलच्छन उच्छत्र उछाह छपि सुच्छ जसजोस जगल्च्छ गुनगुच्छ हे ।
लच्छगुन लच्छी छग्ग यच्छप बिलच्छ पभो प्रेच्छ परतच्छ तो विपच्छ ढनतुच्छहे
कच्छकुटपच्छ दुजरच्छ दानदच्छ महा लच्छमनपच्छ कल्पवृच्छहू न कुच्छहे ॥३६॥

बिचारेनपं बिचारे हानी हा नीति देखिये सूमनकी निशानी सूरत छिपकानी हे
रिझाय जब गुनीने भीरकी अरजकरी मिलजासी आजकाल थानी मनमानी हे
कहें कविराम मिश्र नाम सुनि अमीरीको मानीथी करेंगे महरवानी महादानी हे
धाय देखी तो ढिंग पानदानी दिल नादानी सूमसिरदारनको सिर पीकदानी हे ॥३७॥

महगनघर रासी उदासी घर टोटेको चाह घर सही होत चीज खूब खासी हे
दुरित घर खवासी मजल चोंवासी घर सहलघर बखान्यो जेपुरनिवासी हे ।
रामकवि कहें दासी व्यभिचारघर होत नींद घर उबासी ओ धीर घर झासी हे
रार घर हांसी होंत रोग घर ख्वासी होत मोत घर फांसी होंत मोच्छ घर कासी हे ३८

---

१ गोपिकोक्तिरियम् अतिसमीचीनमिदम् २ घनाक्षर नाम वृत्तम् ३ श्रीमद्राजस्य वर्णनम् ४ श्रीकृष्णागम इत्यथ नामैकदेशे नामग्रहणोक्तेः ५ इदमत्रत्य सामन्तविशेषवर्णनम् अनुप्रास परां कोटिमारूढश्चमत्कारावह इति शम्

इत्यलम् ।

श्रीमद्गौतमगोत्रभूषणमणिः प्रत्यर्थिशङ्कामणि-
वामाचारतमिस्रपुष्करमणी रोगार्तचिन्तामणिः ।
पृथ्वीपालकृतादरोऽखिलबुधश्रेणीशिरःशेखरो
लल्लूरामभिषग्वरोऽभवदिह प्रख्यातविश्वंभरः ॥ ३९ ॥

योगान्वितः सुरसभावनकर्मदक्षः
काव्यादरः परविभावलयं दधानः ।
पुत्रोऽभवद्गुरुसमृद्धिरमुष्य वैद्य-
विद्याचणो जगति **कुन्दनरामनामा** ॥ ४० ॥

गुरुप्रसादाधिगतार्थबोधौ वैद्यागमाकुण्ठितधीप्रसारौ ।
**श्रीकृष्णरामो हरिवल्लभश्च** द्वावात्मजौ तस्य कवी विभातः ॥४१॥

येनाशिक्षि स जीवनाथगुरुतः काव्यप्रकाशाशय-
श्छन्दश्चन्दनदासतः सगणितं वैद्यागमस्ताततः ।
सूते गन्धकजारणावधि कृता येन क्रिया नैकशः
सोऽहं नूतनकाव्यपञ्चककृतिः **श्रीकृष्णशर्मा** कविः ॥ ४२ ॥

**हरिवल्लभ**कविमल्लो वल्लभरमपि ब्रवीति नो वितथम् ।
अधुना बुधवल्लभतां हरिवल्लभतां पटुमतल्लो ॥ ४३ ॥

होलामहोत्सवमथो जयपत्तनस्य
काव्यं विरच्य रुचिरैरवशिष्टपद्यैः ।
**श्रीकृष्णराम**कविना सुधियां मुदर्थे
मुक्तावली व्यरचि सप्तसरा सगुच्छा ॥ ४४ ॥

**श्रीकृष्णराम**कविना स्फुरितसुवर्णगुणजालतो ग्रथिता ।
ललतु गलेऽखिलविदुषां मुक्तकमुक्तावली ललिता ॥ ४५ ॥

ये पण्डितास्ते कवितानभिज्ञाः समुद्यदीर्षाः कविताविदो ये ।
तथापि काव्यं रचितं यतोऽस्मिन्नारायणः प्रीतिमुरीकरोति ॥ ४६ ॥

---

१. एतेन भाषापद्यानां बहुत्वादिच्छाचेद्धोलोत्सवादौ द्रष्टव्यमिति व्यज्यते.

श्रुत्वापि न स्तौति शिर प्रकम्पैर्य कोऽपि काव्य परम परस्य ।
वय पुन पूरुषसज्ञित त विषाणहीन पशुमेव विद्मः ॥ ४७ ॥

अनभिज्ञ' समासाद्य कविता गुणवत्तमाम् ।
सीदति स्वयमेवाहो रासभ शर्करामिव ॥ ४८ ॥

श्रीकृष्णकल्पितामेता श्रीकृष्ण कृतिमुत्तमाम् ।
खलारब्धपरीवादादव्यादव्याजतोऽनिशम् ॥ ४९ ॥

श्रीमत्कुन्दननन्दनवैद्यश्रीकृष्णरामरचितायाम् ।
मुक्तकमुक्तावल्या ललन्तिकेय समाप्तिमिता ॥

॥ समाप्ता चेयं मुक्तकमुक्तावली ॥

आदित श्लोका ॥
५५९

॥ शुभम् ॥



॥ श्रीः ॥

# सारशतकं



मनोज्ञं

वैद्यश्रीकृष्णरामकविरचितम् ।

पर्वणिकरोपनामकनारायणभट्टकृतशोधम् ॥




तेन कविनैव काव्य-

द्वयमुद्रणत पर हि

मुम्बय्याम्

निर्णयसागरयन्त्रे मुद्रायितमात्मवित्तेन ॥

सन् १८८७ इसवी

॥ श्रीः ॥

# अथ सारशतकं प्रारभ्यते ॥

॥ श्रीगणेशाय नमः ॥

अथ[1] कालिदासभारविमाघश्रीहर्षरचितकाव्यानाम्[2] ।
संक्षिप्य साधु[3] सारं श्रीकृष्ण[4] प्राहें पद्यशतकेन ॥ १ ॥

## ॥ तत्रादौ रघुवंशसारः ॥

वाल्मीकिमिव सभासं यशःशरीरेण सर्वदा सन्तम् ।
रसवद्वचनविकासं नमत कविं कालिदासं तम् ॥ २ ॥

राजासीन्मनुवंशभूर्भुजजितद्वीपो दिलीपो महा-
न्पुत्रार्थी स वधूसखः प्रणमितुं शिष्टं वसिष्ठं ययौ ।
क्ष्मासंक्रन्दन नन्दिनीं परिचर त्वं नन्दनं प्राप्स्यसी-
त्यादिष्टो मुनिना व्यधत्त करुणायोगोदयो गोव्रतम् ॥ ३ ॥

मायाकेसरिणं प्रदर्श्य नृपतेर्भावं विदित्वा मुने-
र्धेनुः सूनुमवाप्नुहीति मुदिता तस्मै वरं सा ददौ ।
सोऽपि प्राप्य मनोरथं मुनिमुपामन्त्र्य प्रजावत्सलो
देव्या सार्धमुपाजगाम पवनप्रेङ्खत्पताकं पुरम् ॥ ४ ॥

देवी द्राक्सुषुवे शुभेऽहनि रघुं राजाऽस्य यूनः क्रमा-
त्कृत्वोद्वाहमतीव गृध्नुरभवद्वृद्धोऽश्वमेधान्प्रति ।
द्वेपादश्वमुपं विजित्य रघुणा शक्रं प्रतापी मखाँ-
ल्लब्ध्वैकोनशतं रवौ कुलधुरं धृत्वा सदारोऽसंसरत्[11] ॥ ५ ॥

---

१ मङ्गलार्थोऽनन्तरार्थश्च काव्यद्वयमुद्रणानन्तरमित्यर्थः २ महाकाव्यानामिति हृद-यम् ३ क्रियाविशेषणम् ४ श्रीकृष्णराम ५ व्रते ६ भूमहेन्द्र ७ सुदक्षिणया ८ अयोध्याम् ९ अभिलाषुक १० 'न लोका–' इति षष्ठीनिषेधः ११ वनमि-त्यध्याहार्यम् 'प्रविश' इत्यत्र गूढमिन्गितम्

स्थित्वा राज्यपदे रघुः परिचरन्हित्वा प्रमादं द्विजा-
न्गत्वा सैन्यपुरःसरः समाधिकं जित्वा चतस्रो दिशः ।
हत्वा विद्विपतां श्रियो मख[1]महं कृत्वा कृती दक्षिणां
दत्त्वा सर्वधनोच्चयं निजयशः श्रुत्वा दरिद्रो बभौ ॥ ६ ॥
विद्यान्ते गुरुदक्षिणां मृगयते कौत्साय यक्षेश्वरा-
दाकृष्य व्यतरद्रघुः कनकजाः कोटीश्चतस्रो दश ।
देव्यामस्य तदाशिषाऽभवदजः सोऽपीन्दुमत्यै प्रया-
नस्त्रं[2] शा[3]पहरः प्रियंवदमुखात्प्राप्याविशत्कुण्डिनम् ॥ ७ ॥
प्रा[4]तर्मृष्टतनुः स्वयंवरमजो भूपान्भया[5] ह्रेपय-
न्गत्वा भोजनृपप्रदिष्टममलश्रीरारुरोहासनम् ।
राज्ञामिन्दुमती कुलानि विपुलान्याकर्णयन्ती मुदा
कण्ठेऽजस्य वरस्रजं वररुचाश्चिक्षेप भावालसा ॥ ८ ॥
वैदर्भीं परिणीय यान्तमथ तं राज्ञां वलं मत्सरा-
न्मध्येमार्गमजं रुरोध शिथिलः सेतुर्यथाऽम्भोभरम् ।
युद्धे तत्र परैर्हते निजबले वीरोऽयमेको रथी
तेना[6]स्त्रेण रिपून्विमोह्य महितो दारैरयोध्यामयात् ॥ ९ ॥
प्राप्तं तं जयिनं प्रशस्य दश[7]मी प्रोत्सृज्य राज्यं रघु-
स्तत्त्वज्ञोऽपि सुतार्थितः स सरयूतीर्थे वसन्स्व[8]र्गतः ।
कुर्वन्राज्यमजः सुतं दशरथं दृष्ट्वेन्दुमत्यामथो
रागी नारदमाल्यतो विधिवशात्तस्यां मृतायां मृतः ॥ १० ॥
राजा पङ्क्तिरथः पुरंदरसुहृज्जग्राह तिस्रो वधूः
कौशल्यामनु कैकयीं शुचियशाश्चित्रां सुमित्रामिति ।
कुर्वाणो मृगयां भ्रमान्मुनिसुतं विध्यन्स तत्ताततः
शापं पुत्रवियोगतो मृतिकरं मेनेऽनपत्यो वरम्[9] ॥ ११ ॥

---

१. यज्ञोत्सवम्. २. संमोहनास्त्रम्. ३. एतेन मतङ्गमुनिशापमूलकमतङ्गजत्वाश्रयप्रियंव-दगन्धर्वकथाऽनुसंधेया. ४. अत्र प्रबोधस्तुतिरनुसंधेया. ५. कान्त्या. ६. संमोहनास्त्रेण. ७. वृद्धः. ८. स्वःस्वर्गम्. ९. अत्र यद्यपि नवमसर्गानुसारेण यमकमपेक्षितं तथापि कथा-बाहुल्यात्तस्याप्राप्तावपि 'करं वरम्' 'चित्रां सुमित्राम्' इत्यनुप्रासमात्रेण संतोष्टव्यम्.

आविर्भूय नृपाय यज्ञपुरुष पुत्रेष्टिकुण्डान्तरा-
द्रक्ष क्षुब्धसुरार्थिताच्युतकलागर्भं चरु सददौ ।
काकुत्स्थेन पृथग्विभक्तचरवस्त प्राश्य तिस्रोऽपि ता
गुर्विण्यश्चतुर सुतान्सुषुविरे श्रीरामभद्रादिकान् ॥ १२ ॥

विश्वामित्रमुपास्य लक्ष्मणसखश्छित्त्वेषुणा ताटका
रामो यज्ञमवन्समेत्य मिथिला शभोरभाङ्क्षीद्धनु ।
स्वीचक्रे जनकात्मजा तदनुजास्तस्य त्रयस्तेऽनुजा
पश्चाच्चापविभङ्गरुष्टमजयत्त जामदग्न्य प्रभु ॥ १३ ॥

आज्ञामेत्य पितुर्वने विचरते रक्षांस्यल निघ्नते
सीता मार्गयते कपिं कलयते वातात्मज पृच्छते ।
सेतु कल्पयते विभीषणमपि स्वीकुर्वते रावण
सद्य सहरते सुरेन्द्रमवते रामाय राज्ञे नम ॥ १४ ॥

ता सकल्प्य विभीषणाय सहसा लङ्का कलङ्कापह
सीता पावकपाविनीं दधदलमान विमान श्रित ।
दूरादब्धिवनाश्रमादि सकल वस्तु प्रियायै गृण-
ञ्श्रीरामो भरतेन वन्दितपद साकेतमुत्कोऽविशत् ॥ १५ ॥

कीर्णास्रा जननीर्ननाम विमना सस्मार तातस्य स
श्रीमात्राज्यधुर दधार परित शुश्राव वाच्याङ्कुरम् ।
सीता दोहदिनी सतीमपि विदस्तत्याज मत्या जग-
त्कीर्ति कि च मखाश्वकार विभवैरानर्च सत्रन्धिन ॥ १६ ॥

सीताऽसूत सुतावुभावथ मुनेर्वाचा स्ववाच्यच्छिदे
शुद्धा चेदहमम्ब मा गिल तदेत्युक्त्वा तिरोभूद्भुवि ।
पुत्रावत्र नियोज्य तौ कुशलवौ विज्ञापितो वेधसा
पौरै सार्धमगात्स्वधाम सुयशा रामाभिधानो हरि ॥ १७ ॥

---

१ चरम् २ एतेन सुबाहुमारीचनिग्रहोऽनुसधेय ३ तस्या सीताया अनुजा भगिनी ४ प्रसिद्धम् ५ खरदूषणादीनि ६ सुग्रीवम् तेन वालिवधोऽप्यर्थ-वानुसधेय ७ स्फारप्रमाणम् ८ पुष्पकम् ९ निन्दाङ्कुरम् १० वाल्मीके

रात्रावेत्य रहः कृशावयवया संप्रार्थितोऽयोध्यया
स्वां संकल्प्य कुशावतीमुदचलद्दृष्टाङ्कुशस्तां कुशः ।
क्रीडंस्तत्र नदीजले जयमणिं नागेन जानन्हृतं
सज्जास्त्रः कुमुदेन तन्मणिमुपं दत्त्वा स्वसारं स्तुतः ॥ १८ ॥
पुत्रे सत्यतिथौ कुशो निजभुजश्लाघी महेन्द्राज्ञया
दैत्यं दुर्जयमाजघान समरे सोऽप्याशु तेनावधि ।
साकेतेऽतिथिरभ्यषेचि सचिवैः सोऽप्यूढदारः क्रमा-
त्सर्वस्वं स्वसुते निधाय निषधे द्रागास शक्रातिथिः ॥ १९ ॥
साकेते निषधादनु क्षितिभुजः संजज्ञिरे विंशति-
स्तत्र श्रीध्रुवसंधिरित्यजनि कोऽप्येकोनविंशो नृपः ।
सोऽप्युत्पाद्य सुदर्शनं मनसिजश्रीदर्शनं साहसी
तन्वानो मृगयामवाप विपदं सिंहान्नृसिंहः स्वयम् ॥ २० ॥
स्वर्गं याति सुदर्शनेऽस्य तनुजः स्थित्वाऽग्निवर्णः पदे
कामी न्यस्य धुरं स्वमन्त्रिषु परं स्त्रीणां विधेयोऽभवत् ।
यक्ष्मक्षामतया व्यसुं शिखिनि तं गूढं दधुर्निष्कुटे
राज्ञी तस्य बभार गर्भसुभगाऽमात्यानुमत्या महीम् ॥ २१ ॥
श्रीमत्कुन्दननन्दनवैद्यश्रीकृष्णरामकविकलिते ।
प्रससार सारशतके सारो रघुवंशकाव्यस्य ॥

---

॥ अथ कुमारसंभवसारः ॥

आस्ते देववपुः कुबेरककुभि श्रीमान्हिमानीगिरि-
र्मेना तस्य वधूरसूत तनयां यासीत्सती प्राग्भवे ।
तां तत्त्वादवगत्य नारदगिरा शंभोः सपर्याविधा-
वालीभिः सह संनियोज्य मुमुदे भूमीधराधीश्वरः ॥ २२ ॥
जग्मुस्तारकनिर्जिता दिविषदः पैतामहं तत्पदं
तेषामाविरभूद्विधिस्तमथ ते प्रोचुर्भयं तारकात् ।

---

१. सति-अतिथौ-इति च्छेदः. २. वह्नौ.

आकृष्टु प्रयतध्वमद्रितनयारूपेण शम्भोर्मन
सेनान्य समवाप्स्यथेति विबुधानाभाष्य सोऽन्तर्दधे ॥ २३ ॥
वृत्रघ्नस्य गिरा स्मरो मधुसख स्थाण्वाश्रम प्रस्थित-
स्तावत्तत्र जगाम मंक्षुकुसुमाकरपोज्ज्वला पार्वती ।
लुभ्यस्तामवलोक्य दिक्षु मृगयन्हृद्विक्रियाकारण
पार्श्वे मारमुदीक्ष्य नेत्रशिखिना दग्ध्वा तिरोधाद्धर ॥ २४ ॥
क्रन्दन्ती कुररीव वीक्ष्य विरति पत्यु प्रणाश रति-
र्यावत्सचिनुते चिता गगनगीस्ता तावदाश्वासयत् ।
कामप्रेयसि मा कुरुष्व मरणोद्योग यदा पार्वतीं
श्रीकण्ठ परिणेष्यते ननु तदा सजीवयिष्यत्यमुम् ॥ २५ ॥
पार्वत्या स्तुवते तप. सुमनसा विज्ञापना शृण्वते
सेनान्य सुतमिच्छते वटुतया प्रच्छन्नमागच्छते ।
सकल्प परिपृच्छते स्वविषये निन्दा मुहुस्तन्वते
प्राकव्य परिकल्प्य ता कलयते कुर्मो नम शम्भवे ॥ २६ ॥
यूयं यात गिरिं तदीयतनया याचध्वमस्मत्कृते
साक्षादित्यनुशास्य मन्मथजिता सप्तर्षय प्रेषिता ।
ते समन्त्र्य निरन्तर हिमवता निष्पाद्य कार्यं पुन-
स्तस्मै लग्नदिन निवेद्य समुदे ख तद्विसृष्टा ययु ॥ २७ ॥
ब्रह्माऽसौ खगकेतुरेप भगवन्नेते दिशामीश्वरा
इत्य नन्दिगिरा सुरानवसरव्यग्रान्विदन्सर्वश ।
ईश प्राप हिमाद्रिपत्तनमुमामुद्वाह्य साक तया
क्रीडासद्म समाससाद स दयानिघ्नोऽनुगृण्हन्स्मरम् ॥ २८ ॥
विश्रम्भ समुपार्जयन्नतिकलाचार्यं प्रियाया शनै-
रद्रेर्वेश्मनि मासमेकमवमत्सलालितो मेनया ।

१ 'कल्पकुसुमा' इति गोपीनाथपण्डिताभिनन्दित पाठ २ पार्वतीम् ३ शिवस्य गुरुजनाभावात्स्वयमेवैतादृशे कर्मणि प्रवृत्तिरिति साक्षात्पदेन द्योत्यते ४ अत्र 'प्रार्थयन्ति शयनोत्थित प्रिया ' इतिवद्गिणज्बोध्य

कैलासप्रभृतिस्थलेषु चतुरश्चाटूक्तिचुञ्चुस्तया
रेमे स्तम्भिततत्त्वमद्रिसुतया रागादृतूनां शतम् ॥ २९ ॥
मध्येमोहनमद्भुतच्छविमसावालोच्य पारावतं
बुद्ध्वा वन्हिममोघमस्य वदने रेतः प्रसह्य न्यधात् ।
शर्वाणीं स्वरहस्यभेदचकितामग्निं शपन्तीं शये
धृत्वा स्मेरमुखो वही रतिगृहादासीत्सुरप्रार्थितः ॥ ३० ॥
शुक्रं शांभवमक्षमेण शिखिना वोढुं हरेराज्ञया
गङ्गायामथ कृत्तिकासु च तया तत्तप्तपानीयया ।
ताभिर्गर्भभरालसप्रकृतिभिर्न्यस्तं शराणां वने
तत्रस्थं भवितव्यताबलवशाद्बालः षडास्योऽजनि ॥ २१ ॥
एतस्मिन्पुनरन्तरे गिरिजया साकं नभः पर्यट—
न्दृष्ट्वा तद्दिनजातमात्रमधिकोद्भासं शिवः षण्मुखम् ।
वन्हौ पार्वति यन्मया विनिहितं रेतः पुरा तत्क्रमा-
डिम्भोऽसावजनि त्वमस्य जननीत्युक्त्वा तमग्राहयत् ॥ ३२ ॥
जिष्णुस्तारकतर्जितः पुरन्दं नुत्वा निबद्धाञ्जलिः
स्कन्द नाथ नियुङ्क्ष्व दैत्यहतये द्रागित्यमभ्यार्थयत् ।
ईशः षड्दिनदेश्यमप्युपचिताकारं कुमारं कृपा-
कूपारो गिरिजागिरा हरिपरित्राणाय तं प्राहिणोत् ॥ ३३ ॥
साष्टाङ्गं गिरिजागिरीशचरणौ नत्वा गृहीत्वाशिषं
शक्रालम्बितपाणिरग्निजननो नाकं प्रतस्थे मुदा ।
गत्वाताममरावतीमरिकरिण्याविद्धवप्रां वली
सेनापत्यपदं बभाज विबुधैरभ्यर्थ्यमानोदयः ॥ ३४ ॥
देवानीकनुतः स तारकपराभूत्यै भवानीसुतः
शक्रानीतरथेन वर्मरुचिना युद्धाभिमानी ययौ ।

---

१. मध्येसुरतम्. २. हस्ते. ३. इन्द्रः. ४. असमाप्तषड्दिनम्. ५. स्कन्दः.

स्व स्व वाहनमाकलय्य विबुधा 'हेतीर्मृशन्त' क्रुधा
सेनान्य हितेमन्वयुस्त्रिजगता मान्य वदान्य बुधा. ॥ ३५ ॥
सनद्धामधिगम्य षण्मुखचमूमाकाशवाग्वारितो-
ऽप्युद्दण्ड प्रचचाल चण्डिमचणः स्व स्फारकस्तारक ।
तत्र स्वस्तटिनीतटे कटकयोर्न्यावर्त्तितै पट्टिशै
सवट्टो जवटे स्फुट भटघटारौद्राट्टहासै कटु ॥ ३६ ॥
भिन्नेभस्रवदस्रसागरतरद्वीर प्रतिस्पर्द्धिना
केशाकेशि भुजाभुजि प्रववृते देवासुराणा रण ।
जित्वा तत्र दिगीश्वरानथ रथक्षुण्णद्विपद्वाहिनी-
मासास्थि शितमायकै समकिरत्स्कन्द स दैत्येश्वर ॥३७॥
शस्त्रास्त्रेषु हतेषु सयति रथादुत्प्लुत्य कोशादसि
कर्षन्षण्मुखसमुख सुररिपुर्द्रुद्राव दर्पान्धधी
शक्ति शक्तिधर प्रतोल्य विकट हुङ्कृत्य चिक्षेप या
सद्य सा तडिदद्रिशृङ्गमिव त भित्त्वा हरे श व्यधात्॥३८॥
श्रीमत्कुन्दननन्दनवैद्यश्रीकृष्णरामकविकलिते ।
प्रससार सारशतके स्फार सार कुमारकाव्यस्य ॥

---

॥ अथ किरातार्जुनीयसारः ॥

जिगाय विस्फूर्तिमती यदीया प्रतिमा रविम् ।
मन्महे कविरत्न त वय सम्प्रति भारविम् ॥ ३९ ॥
तत्र द्वैतवने वनेचरमुखाच्छ्रुत्वा द्विषामुच्छ्रय
कृष्णामेत्य युधिष्ठिरो रिपुयशश्चर्या चचक्षेऽनुजान् ।
कृष्णाकर्ण्य मनस्विनी निजतिरस्कार स्मरन्ती नृप
क्षात्रोऽसि श्रय पौरुष जय रिपूनित्याह नित्याग्रहा ॥ ४० ॥
भीम प्राह विभो यदुक्तमनया तत्तावदङ्गीकुरु
प्राप्त चेत्स्वपद त्वयाऽरिविहित दोर्भ्यां किमाभ्या मम ।

---

१ आयुधानि स्त्रीलिङ्गोप्यय शब्द २ हितावदम् हि-तम् इति वा च्छेद ३ प्रसिद्धे

[1]भीमं भीमवचो विचिन्त्य नृपतौ मा तात धैर्यं जही-
त्येवं शासति [2]तं शनैः स भगवान्व्यासः कुतोऽप्यासदत् ॥ ४१॥
दत्त्वा द्राङ्[3]मनुमर्जुनाय स मुनिर्यत्र त्वमत्रस्तधीः
सिद्धिं यास्यसि यक्ष एष तमगं त्वां नेष्यतीत्यन्वशात् ।
पृष्ट्वा पार्थिवमर्जुनोऽर्जुनयशा वर्मावृतः सायुधः
पाञ्चालीमुपमन्त्र्य तीव्र[4]तपसे यक्षद्वितीयो ययौ ॥ ४२ ॥
कुर्वन्तीव निबोध पङ्कजरुचः स्वच्छाम्बरा दिक्स्त्रियः
संलापं विरुतैर्वलक्षैगरुतामेवं वयस्योदितः ।
गाण्डीवी शरदन्तुरां स शरदं सानन्दमन्तः स्तुव-
न्दूरादेव ददर्श हर्षदमुमातातं लतातन्तुभिः ॥ ४३ ॥
श्रीमानेप हिमाद्रिरीशशिखरोद्भासी शिलाशीतलो
हंहो एष तटे तटे मणिमयो मेरुर्नमेरून्नतिः ।
नीलाश्मद्युतिरिन्द्रकीलशिखरी सोऽयं तपो यं श्रितः
कर्तासीत्यवतार्य तत्र तमसौ दक्षोऽथ यक्षो ययौ ॥ ४४ ॥
यक्षाः प्रेक्ष्य तपोऽर्जुनस्य चकिताश्चख्युर्नता वज्रिणे
धन्वी कोपि [10]धरे तपस्तपति तं देवः स्वयं वेत्त्विति ।
देवोऽप्यज्ञ इव त्वरामभिनयन्नभ्यादिशद्द्युस्त्रियः
सज्जा गच्छथ किंकरीकुरुत तं व्यामोह्य नृत्यादिभिः ॥ ४५ ॥
स्वर्गादप्सरसो निरीय सचिवैरुद्दाममन्दाकिनी-
कल्लोलानिलकेलिलोलदलकस्रस्तप्रसूनोत्कराः ।
आसेदुर्हरिचन्दनाञ्चितकुचाः सन्नन्दनानन्दनाः
श्रीसंक्रन्दननन्दनं द्रुततरप्रस्पन्दनैः स्यन्दनैः ॥ ४६ ॥
ताः संभूय जगाहिरे नगवनीर्वल्लीर्मतल्लीरुचः
पुष्पाणां विचिचीषया श्रमजलप्रम्लानगण्डश्रियः ।

---

१. नीतिविरुद्धत्वाद्भयानकम्. २. भीमम्. ३. मन्त्रम् ४. तीव्रं तपः कर्तुम्. ५. हंसानाम्. ६. यक्षेणोक्तः. ७. हिमालयम्. ८. नमेरवो वृक्षविशेषाः. ९. अस्मिन्पद्ये पञ्चमसर्गानुसारेण यमकं कृतमिति द्रष्टव्यम्. १०. पर्वते. ११. इदं विशेषणं कर्तृकर्मणोः.

उत्क्षिप्तोर्मिकरा रथाङ्गविरुतैराकारयन्तीमिव
प्राप्य स्वस्तटिनीं विजहुरटनक्लान्ता पय केलिभि ॥ ४७ ॥

चक्रे क्रन्दति कैरवे विकसति स्फार स्मरे स्फूर्जति
प्रेयोभिर्मधु लम्भिता सशपथ ता, स्वर्गवाराङ्गना ।
ज्युत्थद्भूषणमुद्भ्रमत्स्तनयुग नृत्यन्नितम्ब स्फुर-
त्सीत्कार मदगद्गदस्मरकथ सानौ गिरे रेमिरे ॥ ४८ ॥

प्रात स्फीतरुचो मृदङ्गनिनदैराहूतसर्वर्तवो
व्याजव्यञ्जितनाभि नर्मसुभग नृत्य दधानाश्चिरम् ।
प्रत्येक कपिकेतनस्य पुरतस्तैस्तै प्रयत्नैर्धिया
व्यायस्य प्रययुर्विपण्णवदना ख खेचराणा स्त्रिय ॥ ४९ ॥

विप्र सन्हरिरित्य पार्थमवदच्चर्याविरुद्ध त्वया
योगिन्ब्रूहि युयुत्सुनेव किमिद सज्य धनुर्धार्यते ।
प्रोस्त शत्रुभिरर्जुनोऽस्मि विदधे शक्रार्थमीदृग्व्रत
पार्थायेति विवृण्वतेऽदिशदमौ व्यक्त शिवाराधनम् ॥ ५० ॥

पार्थप्रौढतप प्रकम्पितमुनीनाश्वास्य भक्तप्रिय
कर्तु कीर्तिममुष्य कामपि समिद्युक्ति नवामुन्नयन् ।
बुद्ध्वा पापमति पुन पशुपतिर्मूक महासूकरा-
नूक हिंसितुमुच्चचाल मृगयाकूटात्किराताकृति ॥ ५१ ॥

यावत्पोत्रिणमैच्छदेप मथितु तावत्पुरारेरिपु-
र्भित्वा त धरणी ममज्ज विभिदे पार्थेपुणा सोऽप्यनु ।
गृह्णन्त हतकोलमर्जुनमिपु द्रुत किरातेशितु-
र्मा गृहीष्व यते चमूपतिशर प्राहेति निर्भर्त्सयन् ॥ ५२ ॥

मा चेदेप शरेप्सुरेष्यति तदा सलप्स्यते दुर्दशा-
मित्युच्चैर्विवदन्तमर्जुनमल सतर्ज्य दूते गते ।

---

१ इन्द्र २ परास्त ३ एतन्नामक दानवम् ४ सूकरस्वभाव तदाकारमिति यावत् ५ हतकोलमिषु गृह्णन्तमर्जुनमित्यन्वय

मल्लाँस्तत्र ववर्ष भिल्लपृतना कादम्बिनीवाचले
पार्थोऽप्याशु धनुर्वितत्य विशिखैर्द्राग्द्रावयामास ताम् ॥ ९३ ॥
स्कन्दो वीक्ष्य रणाद्गणानपसृतान्व्याचष्ट रे श्रूयतां
शत्रुभ्यो युधि पृष्ठमर्पयति यो नूनं स वै श्वा नरः ।
भग्नाँस्तान्प्रतिषिध्य दर्शितकृपः श्रीमान्कपर्दी पुन-
र्बाणौघप्रसरैर्बिभेद विजयं दग्दीप्तवैश्वानरैः ॥ ९४ ॥
स्वमास्त्रं क्षिपते तमोपहतये तेजः स्वमातन्वते
सर्पानाह्वयते विशिष्य सृजते तार्क्ष्याँस्तदुच्छित्तये ।
वह्निं ज्वालयते पयोदघटया निर्वापणं कुर्वते
श्रीकृष्णो नतिमर्जुनाय तनुते मायाकिराताय च ॥ ९५ ॥
चापे क्वापि तिरोहिते सह शरैः खड्गे पुनः खण्डिते
विक्षुण्णेषु शिलाद्रुमप्रभृतिषु ध्वस्ते च वर्मण्यहो ।
शोणाक्षः क्षरदस्त्रभीषणवपुर्वीरः किरीटी पुरः
प्रक्रामन्नतुदद्भवस्य करुणासिन्धोर्भुजाभ्यामुरः ॥ ९६ ॥
व्यक्तस्तत्र मृडोऽर्जुनेन समरप्रीतः प्रणम्य स्तुतो
द्रागस्मै स्फुटहेतये निजधनुर्वेदं समध्यापयत् ।
अस्त्रं स्वं स्वमुपादिशन्नथ दिशामीशा गिरीशाज्ञया
गत्वाऽसौ स्वगृहं विशेषविलसल्लक्ष्मीर्ववन्दे नृपम् ॥ ९७ ॥
श्रीमत्कुन्दननन्दनवैद्यश्रीकृष्णरामकविकलिते ।
सारोऽत्र सारशतकेऽपूरि किरातार्जुनीयकाव्यस्य ॥

---

## ॥ अथ शिशुपालवधसारः ॥

कविताकुन्दविकासनकृतिने विजितजनतानिदाघाय ।
दलितोद्दामाघाय प्रणतिं कलयामि माघाय ॥ ९८ ॥
श्रीकृष्णं स्वरुपेत्य नारद इति प्रोवाच वाचं हरे-
श्चैदीशं किमुपेक्षसे जहि रणे जन्मत्रयीविद्विषम् ।

---

१. अयं श्लोकोऽपि पञ्चदशसर्गानुसारेण यमकालङ्कृतः. २. अत्र लक्ष्मीपदेन लक्ष्म्यङ्कत्वं व्यज्यते. ३. इन्द्रस्य. ४. शिशुपालम्.

ओमुक्त्वा स विसर्ज्य त जिगमिषुश्चैद्य प्रति श्रीपति
सद्रक्तेन चिकीर्षता मखमुपाहूत पृथासूनुना ॥ ५९ ॥
तावाहूय मुरारिरुद्धवबलौ कार्यद्वयव्याकुल-
श्चैद्य यानि युधिष्ठिर किमथवा पप्रच्छ सशय्य स ।
चैद्य द्याम वय वचो मुशलिन' सदूपयन्नुद्धव
पार्थ प्राक्समुपेहि तत्र युधि त हन्तास्यवोचद्गह ॥ ६० ॥
शम्पामब्द इवोद्वहन्स्फुरदलकारश्रिय सायुध
पश्यन्द्वारवतीं पुरीं पथि पथि प्रीत सुवर्णोज्ज्वलाम् ।
कर्षन्सैन्यमदैन्यमर्णवमरुद्दोलद्दुकूलाञ्चल-
स्तिष्ठन्पुष्यरथे शनैरथ हरिप्रस्थ प्रतस्थे हरि ॥ ६१ ॥
उद्यद्धातुविभाविभावितवियच्चित्र विचित्र स्नुमि
शैल रैवतक प्रपद्य वत क मोद न लेभे हरि ।
श्रान्त सैन्यमिह न्यवीविशदल पश्यन्नमुष्य स्थल
प्रोत्फुल्लामरदारु दारुकगिरा हारी विहारी विभुं ॥ ६२ ॥
त्रस्यद्धस्तिपकावनेजितमहानागा महासादिभि-
र्धारावाहितसप्तिरुत्सुकवणिग्विस्तार्यमाणापणा ।
सूतोन्मार्जितधूलिधूसररथा पाकोत्कपौरोगवा
सेनाऽवातरदभ्युपेन्द्रशिविर भूभृत्तटीभूमिषु ॥ ६३ ॥
माकन्देषु मधु शिरीषतरुषु ग्रीष्म पुन प्रावृष
नीपश्रेणिषु नीरजेषु शरद लोध्रेषु हेमन्तकम् ॥
शेफालीद्रुममञ्जरीषु शिशिर प्रत्येकमित्थ स्नुषु
व्यातन्वत्यचले चचाल स मुदेर्हर्तु विहर्तु विभु ॥ ६४ ॥
सत्पुष्यस्तवकानतव्रततिषु व्यञ्जत्स्तनाभ्या नता
कूजत्पक्षिनिनादितासु चरणन्यासक्कणन्नूपुरा ।

१ तडितम् २ कनकेन ब्राह्मणादिना चोज्ज्वलाम् ३ क्रीडारथे ४ अत्र पद्ये चतुर्थसर्गानुसारेण यमकमनुप्रामश्च ५ पाकोत्कण्ठिता पौरोगवा महानसाध्यक्षा यस्यां सा ६ मुदा, ईह, ऋतुम्, इति च्छेद चतुर्थपादयमक सर्गानुसारेण

भूभृत्काञ्चनकंदरासु कनकस्फीताः प्रकाशेप्यहो
नार्योऽन्योन्यमलक्षिताः स्वकमनैश्चिक्युः सुमानां स्रजः ॥ ६५ ॥

श्रान्ताः सस्नुरगेन्द्रनिर्झरनदीपूरेषु दूरेप्सुभिः
प्रागुत्प्लुत्य तरङ्गिरर्पितकराः कान्तैः कुरङ्गीदृशः ।
किं च न्यञ्चदगाधनाभिकुहराचान्तोर्मिवेगाः शनै-
रुत्तेरुः श्लथकेशपाशनिपतन्मुक्ताभवार्विन्दवः ॥ ६६ ॥

भास्वत्यस्तमुपागते प्रसरति ध्वान्ते समन्तादति
ज्योत्स्नां चन्द्रमसि प्रतन्वति धनुःकाण्डं स्मरे धुन्वति ।
दूतीभिः प्रियसद्म साग्रहमुपानीताः समाकल्पिता-
नल्पाकल्परुचः प्रियाः प्रिययुजः पानं पपुः प्रेमतः ॥ ६७ ॥

द्युम्नोद्दामदरीषु रत्नफलितभ्राजिष्णुदिव्यौषधी-
दीपद्योतचमत्कृतासु मदिरामत्ता गैलद्ग्रन्थयः ।
कम्पोदग्रमधीयुरम्बुजदृशः प्रेयोभिरध्यापिता-
स्तत्तादृक्किमपि स्मरोपनिषदां रम्यं रहस्यं रहः ॥ ६८ ॥

प्रातः कृष्णविबोधनाय शिबिरप्रान्ते सुधासुन्दरै-
रालापैर्विरुदावलीरुपजगुर्वैतालिकाः सङ्घशः ।
मन्दं मन्दमथ प्रबुध्य भगवान्संपाद्य सर्वाः क्रियाः
सज्जः सन्कँटकं महीध्रकटँकादुत्थापयन्निर्ययौ ॥ ६९ ॥

संनह्यद्भटसिंहनादभरितब्रह्माण्डभाण्डोदरं
कल्पोद्वेलसमुद्रसंनिभमिभोदग्रं स्वसैन्यं वहन् ।
क्रामं क्राममसावनेकविषयान्राज्ञां नमस्कुर्वतां
ग्राहं ग्राहमुपायनानि यमुनामुत्तीर्य वेगादगात् ॥ ७० ॥

पार्थे संमुखमागतं प्रणमते भीमार्जुनौ श्लिष्यते
प्रह्वौ प्रेक्ष्य यमौ स्मितं विदधते वार्तां पुनः पृच्छते ।

---

१. स्वकान्तैः. २. द्युम्नं सुवर्णम्. ३. गलन्त्यो ग्रन्थयो नीवयो हृदयग्रन्थयश्च यासाम्.
४. सैन्यम्. ५. नितम्बात्. ६. कुशलम्.

इन्द्रप्रस्थपुरीं मुदा प्रविशते प्रासादजालस्फुरा
नारीणा नयनोत्सव कलयते कृष्णाय तस्मै नम. ॥ ७१ ॥
कृष्ण न्यस्य सहायमध्वरविधौ धर्मात्मजो भूपति-
र्दीक्षमित्य हुताशने मखभुजा तृप्त्यै जुहावाहुती ।
सिद्धे कर्मणि पश्यता क्षितिभुजा भीष्मोपदिष्टोऽवप-
द्वीज चैद्यपराहतेर्भगवतेऽनर्घाय सोऽर्घ्य ददत् ॥ ७२ ॥
दत्तेऽर्घ्येऽभिसभ सुतेन तंपस कसद्विपे विद्विप-
न्मात्सर्याद्दमघोपजोऽभवदहो निन्दन्ननिन्दन्नलम् ।
मा गा इत्यसकृन्नृपैरभिहितोऽप्यालम्ब्य खड्ग समु-
त्तिष्ठन्दुष्टमति स्वमेत्य शिबिर जन्याय सज्जोऽजनि ॥ ७३ ॥
कर्ता केशव मानना तव स न स्वामीति दूतोदित
श्रुत्वा सात्यकिना हरीङ्गितविदा सज्जा स्म त ब्रूहि रे ।
चेत्त्व पूर्ववदद्य वक्ष्यसि कटु प्राप्स्यस्यपायानिति
प्रोक्त प्राह चरोऽच्युत स्यति पुरा त्वा सान्वय चेदिराट् ॥७४॥
वाचा चैद्यचरस्य यादवभुवा राज्ञा समाज क्षय-
क्षुब्धाम्भोधिरिव प्रचण्डचरितैरुच्छृङ्खल चुक्षुभे ।
उत्तस्थौ मुसली करेण मुसल धुन्वन्नुपा रुक्मिणी-
कान्त प्रौढसुदर्शनोऽपि स चलन्दुर्दर्शनोऽदृश्यत ॥ ७५ ॥
वल्गद्वीरघटाविमुक्तविशिखव्याहन्यमानद्विप-
श्रेणीनिर्यदनूनशोणितधुनीशोणीकृतार्णोनिधि ।
स्वर्वेश्यापरिमृग्यमाणसुभटो नृत्यत्कबन्धोत्कट
सङ्ग्रामोऽजनि कृष्णचैद्यबलयो प्रेतेन्द्रकुक्षिभरि ॥ ७६ ॥
ताल‍ाङ्केन जिते सचित्तजनिना सैन्ये स युद्धक्षणे
क्रुद्धान्त करणो रणोचितरुचिश्चैद्यो यदूंश्चक्षंणे ।

---

१ धर्मस्य २ निन्दन्ननिन्दन्निति विरोध अनिन्दन्शोभमान इति तत्परिहार इदि परमैश्वर्ये ३ सत्कार तिरस्कार च ४ सास्यति हनिष्यतीति यावत्, पुरायोगे नात्र लट् ५ सप्रकुपेन ६ युद्धोत्सवे ७ जघान क्षणु हिंसायाम् अत्र यमक निरोष्ठ्यत्व च सर्गानुसारेण

उच्चैःश्रैवयरयं निरीक्ष्य नितरां शोणे किरन्नीक्षणे
शौरिः साधु ससार सारचरितस्तं हन्त तत्र क्षणे ॥ ७७ ॥
प्रत्यस्त्रैः शकलीकृतेषु सकलेष्वस्त्रेषु चेदीश्वरो
क्रुद्धा दुर्जयमच्युतं पुनरलं विव्याध वाक्सायकैः ।
चक्री चैद्यशिरश्चकर्त सविभाचक्रेण चक्रेण त-
त्तेजः श्रीपतिमाविशन्नृपतिभिर्वीक्षांबभूवेऽद्भुतम् ॥ ७८ ॥
श्रीमत्कुन्दननन्दनवैद्यश्रीकृष्णरामकविकलिते ।
प्रससार सारशतके स्फारः शिशुपालवधसारः ॥

---

## ॥ अथ नैषधीयचरितसारः ॥

कविषु दधतमुत्कर्षं विस्फुरदनवद्यहृद्यवाग्वर्षम् ।
इह खलु खलप्रधर्षं श्रीहर्षं नौमि हर्षसंघर्षम् ॥ ७९ ॥

भूपः कोऽपि नलोऽनलद्युतिरभूत्तत्रानुरागं दधौ
वैदर्भी दमयन्तिका गुणरुचिः सोऽप्यास तस्यां स्पृही ।
जातु स्वान्तविनोदनाय विरही लीलाटवीं पर्यट-
न्हैमं हंसमसौ निगृह्य तरसा दूनं दयालुर्जहौ ॥ ८० ॥
राजँस्तां दमयन्तिकां त्वयि तथा कर्तास्मि रक्तां यथा
शक्रादीनपि हास्यतीति नृपतिं हंसः कृतज्ञोऽभ्यधात् ।
एवं चेत्खग साधयेप्सितमिति प्रोक्तः स राज्ञा मुदा
द्रागुड्डीय ददर्श कुण्डिनगतो भैमीमटन्निष्कुटे ॥ ८१ ॥
मामुद्दिश्य किमेषि भैमि चटुविन्नालोऽस्मि विस्ते रुचि-
श्चेन्मय्यस्ति नलं वृणीष्व वत तामुक्त्वा व्यरंसीद्द्विजः ।
तस्मै ब्रूहि तथा यथा स नृपतिर्मामुद्वहेदित्युपा-
दिष्टो भीमजया खगो द्रुतगतिः सिद्ध्यै नलायालपत् ॥ ८२ ॥

---

१. श्रीकृष्णः. २. श्रीपतिशब्दोपादानेन श्र्यङ्कतापि संगृहीता. ३. इदं नलदमयन्त्योरुभयोरपि विशेषणम्. ४. गृहारामे. ५. पक्षी. ६. पक्षी हंस इति यावत्.

क्षामाङ्गी विरहाधिना विदधती निन्दा सुधाशोर्ज्वर-
ज्वालाभिर्हुतमुर्मुरीकृतसुमाकल्पाऽथ साऽमृमुहत् ।
भीमस्तत्परिचारिकाकलकलाहूतस्तथा वीक्ष्य ता
ज्ञातो व्याधिरपि स्वयंवरमह कर्तास्म्यवादीदिति ॥ ८३ ॥

ज्ञात्वा नारदत स्वयवरविधि भैम्या स्पृहालुर्हरि
सार्ध दिक्पतिभि पयाण पृथिवीं शच्या शुचा वीक्षित ।
अस्मद्दौत्यमुपेत्य याहि नृप भो भैमीमदृष्टो भटै-
स्तामस्मास्वनुकूलयाश्विति नल सोऽयुङ्क्त दौत्ये छली ॥ ८४ ॥

भूजानिर्भुवनैकदृश्यतनुरप्युच्चैरदृश्यस्तदा
कक्षा सप्त वगाह्य भीमदुहितु प्रासादमासादयन् ।
ता तत्र प्रसमीक्ष्य खण्डनपरा गीर्वाणदूतीगिरा
दूरादुच्छ्वसिति स्म चेतसि भृश दूनोपि दौत्येन स ॥ ८५ ॥

अश्रान्त तरदन्तरोऽद्भुतरसाकूपारपूरान्तरे
प्रत्यारम्य मुखान्नखावधि नलस्ता प्राहुरास स्तुवन् ।
सा तु व्यक्तममु समीक्ष्य चकिता तद्रूपलुब्धा सखी-
प्वाश्चर्यस्तिमितासु कोऽसि किमिह प्राप्तोऽस्यपृच्छत्स्वयम्॥८६॥

दूत विद्धि वराङ्गि मा दिविषदा धन्याऽसि यत्त्वामहो
सोऽप्याशापतिभि सह स्वयमिद ब्रूते वृषा मद्गिरा ।
अस्मास्वन्यतम वृणीष्व कमपि त्व नन्दने नन्द भो
मा क्वापि नरे स्खलेति बहुधा भैमीं नलोऽलोभयत् ॥ ८७ ॥

चित्त मेऽस्ति नले न लेखपतिषु त्व कोनलश्रीस्तये-
त्युक्त प्रोज्झ्य सुरान्नलं श्रयसि किं मुग्धाऽस्यवोचत्स ताम् ।
पश्चादश्रुमुखीमुदीक्ष्य सहसा सोऽह नलस्तत्प्रिये
मा रोदीरिति तत्र वादिनि मे विदर्वाद्विनोऽन्नातरत् ॥ ८८ ॥

---

१ नट इत्यपि रलयोरैक्यावगमात्, तदयन च विशेषण 'कुत्रापि' इति सप्तम्यन्त पूर्व्वापालकपाठक इत्यर्थकम्. २ प., अनलश्रीरित्यपि च्छेद ३ तस्मिन्नाशि ४ पक्षी

आजग्मुर्महति स्वयंवरमहे नन्दन्नले नायका-
श्चत्वारो हरितां हरिप्रभृतयः कृत्वा नलस्याकृतिम् ।
वाग्देव्यां नृपवृन्दवर्णनविधौ बद्धोद्यमायां पुरो
मध्येराजकमाजुहाव तनयां भीमो महीवासवः ॥ ८९ ॥

एते सन्ति सुरा इतः पुनरिमे दीव्यन्ति विद्याधराः
किं च स्फाररुचः पृथक्पृथगितो द्वीपाधिपा आसते ।
सर्वे योग्यतमा वृणीष्व कमपि स्याद्यत्र वा त्वद्रुचि-
र्वाचा भूरि विलोभितापि विजहौ सा चित्तचञ्चन्नला ॥ ९० ॥

पार्श्वे पश्य परे त्वदर्थमपरे द्रागा समुद्रादिमे
प्राप्ताः प्राज्यपराक्रमक्रमयुजः पद्माक्षि पृथ्वीभुजः ।
एषु स्वीकुरु कंचिदेकमिति वाग्देव्योपदिष्टा पुरो
यान्ती वीक्ष्य विसिस्मिये स्मितवतः सा पञ्च मञ्चे नलान् ॥ ९१ ॥

पञ्चस्वेञ्च नलेषु तन्वि कमपि श्रीवीरसेनोद्भवं
देवं मङ्क्षु परीक्ष्य किं भ्रमयसि व्यर्थं त्वमस्मानिति ।
वाचा श्लेषवचःप्रपञ्चफलितामर्त्येशमर्त्येशया
प्रोक्ता पञ्चनलीं विभाव्य समभूत्संदेहभूर्भीमभूः ॥ ९२ ॥

स्तोत्रप्रीतदिगीशदर्शितनला मन्दाक्षमन्दा सती
नत्वा तानियमुत्ससर्ज करतः कण्ठे नलस्य स्रजम् ।
दिक्पालेषु गतेषु खं सह गिरा दत्त्वा वरानम्बरा-
त्सामोदा निपपात मूर्धनि तयोः कल्पप्रसूनावलिः ॥ ९३ ॥

रक्तालंकृतिभिश्चमत्कृतिमती स्नानप्रमृष्टाकृति-
र्भैमी मातृभिरुत्सवप्रकृतिभिः संस्कृत्य सज्जीकृता ।
भूषोल्लासिवलो नलोऽथ विभवैश्चित्रोऽपि पीतो दृशा
स्त्रीभिस्तत्र जगाम कुण्डिननृपाहूतो विवाहोत्सुकः ॥ ९४ ॥

---

१. वाग्देव्या. २. पूर्वोक्तान्नृपानित्यध्याहार्यम्. ३. उत्कृष्टाः. ४. प्राप्नुहि. ५. इदं श्लिष्टं पद्यार्थम्. ६. इदमपि. ७. वाग्देव्या. ८. श्लेषवचःप्रपञ्चे फलिता अमर्त्येशा मर्त्येशश्च यस्याः.

भीम. श्रीनिषधेश्वरेण दुहितुः सपाद्य पाणिग्रह
जन्यान्भक्तमभोजयद्बहुसित सौजन्यसिन्धुर्मुदा ।
इत्थ ता परिणीय भीमभवने रात्रीरुषित्वा कति
प्रीतात्मा विलसंस्तया स निषधोद्देशान्प्रतस्थे नल ॥ ९५ ॥
लिप्सुर्भीमसुता बलेन कलित' कुर्वन्कराल कलि-
र्मा गास्तत्र वृतस्तया नल इति प्रोक्तोऽपि देवै पथि ।
भैमीं तर्हि वियोजयामि नलत पापी प्रतिज्ञाय हा
भ्राम्यन्नाप कथ चिदस्य निलयारामे बिभीत विभी ॥ ९६ ॥
इत्थ तामथ मेदिनीतलशचीमासाद्य सौधे महा-
रत्नस्फूर्जितकाञ्चनक्षितिभृति क्ष्माचक्रशक्रो नल ।
नक्त यत्नवशीकृता क्रमगलल्लज्जा कलाकोविद
कन्दर्पोदधिपारलम्भनतरीमुच्चैर्मुदाऽरीरमत् ॥ ९७ ॥
प्रातर्बोधविवित्सवो रससुधावर्षा. सहर्षा जगु-
र्गाथा बोधकरा कराहतकलातोद्या गृहोद्यानगा ।
बुद्ध्वा प्राड्निषधस्मर सुरसरित्स्नातो रथस्थ समा-
गच्छत्तैरवलोकि हन्त न पुनस्तन्निर्गम सौधत ॥ ९८ ॥
प्राप्ते राज्ञि पुरोगता वितरति स्वर्णाम्बुजन्मान्युरी-
कुर्वाणा नियम समापयति सा मान मनागाश्रिता ।
अङ्के कुर्वति लज्जिता सहचरीरुत्सार्य नीविस्पृशि
द्रागुत्थाय चचाल चालसगतिर्लोलन्नितम्बा बहि ॥ ९९ ॥
सौधान्निःसरते स्मित विकिरते राज्ञा नमो गृह्णते
स्नात्वा त्र्यम्बकमर्चते मुरारिपो स्तोत्राण्यहो ग्रथ्नते ।
भुक्त्वा पर्यटते शनै शतपद मध्ये प्रियामश्नते
साय वर्णयते नमासि कलये तस्मै नलक्ष्माभृते ॥ १०० ॥

---

१ बहुशर्करम्, बहुलं धवलमिति वा २. मधुराख्यानि यै

सायं सांध्यविधिं विधाय विगलद्दोषः प्रदोषस्तवं
प्रत्यारभ्य विधूदयावधि वधूसङ्गादनङ्गो स्तुवन् ।
तस्या [1]लौविषया गिरोऽमृतकिरः श्रुत्वा स काव्यस्थिर-
प्रज्ञः प्राप परं स्मरन्स्मरन[2]वानन्दो नलो विस्मयम् ॥ १०१ ॥

श्रीमत्कुन्दननन्दनवैद्यश्रीकृष्णरामकविकलिते ।
प्रससार सारशतके सारः श्रीनैषधीयचरितस्य ॥

श्रीमाँल्लल्लुभिषग्वरः समभवत्सर्वार्थपारंगमः
पुत्रोऽप्यस्य तथैव विद्वदगदंकाराग्रणीः कुन्दनः ।
श्रीकृष्णस्तनयोऽद्य तस्य कविताव्यायामसिद्धोच्छ्रयः
काव्यं चारु चकार सारशतकं [3]नारायणप्रीतये ॥ १०२ ॥

येनाशिक्षि स जीवनाथगुरुतः काव्यप्रकाशाशय-
श्छन्दश्चन्दनदासतः सगणितं वैद्यागमस्तातततः ।
[4]सूते गन्धकजारणावधि कृता येन क्रिया नैकशः
सोऽहं नूतनकाव्यपञ्चककृतिः श्रीकृष्णशर्मा कविः ॥ १०३॥

श्रीकृष्णरामभिषजा [5]मधुमधुरो द्रुतमकारि सारोऽयम् ।
प्रायः पश्यत परितः परमेकं [6]सारमेव भिषगिष्टम् ॥ १०४ ॥

श्रीकृष्णकल्पितामेतां श्रीकृष्णः कृतिमुत्तमाम् ।
खलारब्धपरीवादादव्यादव्याजतो विभुः ॥ १०५ ॥

श्रीमत्कुन्दननन्दनवैद्यश्रीकृष्णरामकविरचितः ।
पञ्चमहाकाव्यानां सारः प्रससार शतपद्यः ॥

॥ शुभमस्तु ॥

---

१. चन्द्रवर्णनविषयाः. २. अत्रानन्दपदेनानन्दाङ्कतापि संगृहीता. ३. विष्णुप्रीत्यर्थं श्रीनारायणनामककुलगुरुप्रेरणया कृतत्वात्तत्प्रसन्नतार्थं च. ४. पारदे. ५. मधुक्षौद्रम्. ६. औषधविशेषम्. इति शम् ॥